द्वितीय वर्ष पि यु सि संस्कृत पाठ्यपुस्तकम्

# संस्कृतपारिजातः



यं शैवास्समुपासते शिव इति ब्रह्मेति वेदान्तिनो
... इति प्रमाणपटवः कर्तेति नैयायिकाः।
... जैनशासनरताः कर्मेति मीमांसकाः
... इति क्रियापररताः अल्लेति माहम्मदाः]
... विदधातु वाञ्छितफलं श्रीकेशवेशस्सदा ॥





कर्नाटकप्रशासनम्

पदवीपूर्वशिक्षणमण्डली, बेङ्गळूरु

# संस्कृतपारिजातः

S. MELCHIZADECK
II PUC 'C' 881371
St. Joseph's College
Bangalore - 560001

कर्नाटकप्रशासनम्
पदवीपूर्वशिक्षणमण्डली, बेङ्गळूरु

Samskruta Parijatah : A Text book prepared by an Editorial Committee constituted by the Pre-university Education Board, Government of Karnataka and prescribed as the Sanskrit text (Detailed and Non-detailed) for the Second Year Pre-university course: First published in 1987 PP 340 Price Rs.16-00.







Printed and Published by
Sri H.C. BASAVANNA,
J.S.S. PRINTING PRESS,
Saraswathipuram,
MYSORE-570 009.

# Editorial Committee

**Chairman :**

1) Vidwan Dr. H. P. Malledevaru, M.A., Ph.D.
Chairman & Professor of the Department of Post-Graduate Studies & Research in Sanskrit AND Director, Oriental Research Institute,
University of Mysore,
Mysore–570 006

**CIIL Representative :**

2) Sri H. L. N. Bharati, M.A.,
Assistant Editor, Central Institute of Indian Languages, Manasagangotri,
Mysore–570 006

**Members :**

3) Dr. K. Rajagopalachar, M.A., Ph.D.
Professor of Sanskrit and
Principal, Vijaya College,
Bangalore–560 004

4) Sri M. K. Suryanarayana Rao, M.A., (Sans.), M.A. (Hist.)
Reader and Head of the Department of Sanskrit,
National College, Jayanagar,
Bangalore–560 082

5) Vidwan Sri Immadi Shivabasavaswamy, M.A.
Reader in Sanskrit, Rashtrabhasha Visharada,
Maharaja's College, Mysore–570 005

6) Vidwan Sri H. V. Nagaraja Rao, M.A.
Co-ordinator, Ford Foundation Project,
Oriental Research Institute,
Mysore–570 005

7) Vidwan Dr. B. S. Ramakrishna Rao, M.A., Ph.D.
Hindiratna
Reader & Head of the Department of Sanskrit,
National College, Basavanagudi,
Bangalore–560 004

8) Sri H. S. Nagabhushan Bhatta, M.A. (Sans),
M.A. (English), Hindi Ratna
Lecturer in Sanskrit,
A.P.S. College of Arts and Science,
Narasimharaja Colony, Bangalore–560 019

9) Dr. Shikaripura Krishnamurthy, M.A., Ph.D.
Lecturer in Sanskrit, St. Aloysius College,
Mangalore–575 003

10) Smt. H. V. Aruna, M.A.,
Lecturer in Sanskrit, Vivekananda Junior College,
Malleswaram West, Bangalore–560 055

11) Sri N. Radhakrishna Bhat, M.A.,
Lecturer in Sanskrit, University of Mysore,
Manasagangotri, Mysore–570 006

# विषयसूची



## सविस्तरपाठ्यविभागः



## अविस्तरपाठ्यविभागः



## परिशिष्टभागः



---

# प्राक्कथनम्

विद्याभ्यासस्य स्पर्धाह्वानं एकः अनन्तः अविरतः प्रवाहः । अनन्तस्य तस्य विश्लेषणोद्देशेन परिशोधनासम्पादनं एका आवश्यकता । साम्प्रतं तादृशः प्रयत्नः स्वीकृतः राष्ट्रीयस्तरे । तथापि परिमितस्तरे 'शिक्षकस्य' साहाय्यार्थं सततं परियन्त्रणं चावश्यकम् । शिक्षणक्षेत्रे शिक्षकं स्वतन्त्रं स्वनियन्त्रितं कर्तुं विधीयमानाः प्रयत्नाः प्रोत्साहनं अर्हन्ति । अस्यां दिशि विद्यमानास्वपि आर्थिकीषु प्राशासनिकीषु च मितिषु कर्णाटकराज्यस्य पदवीपूर्वशिक्षणमण्डली प्रथमपदन्यासं कुर्वाणा अस्ति ।

१९७७ तमे वर्षे +2 स्तरीयशालाविद्यालयव्यवस्थां सुसंघटयितुं कर्नाटकसर्वकारः डि. वि. अर्सूसमितिं न्ययोजयत् । समितेः प्रणिगदनं १९८० तमे वर्षे अर्पितम् । तस्य प्रणिगदनस्य कार्यान्वयः कर्नाटक-सर्वकारेण आलोच्यमानः वर्तते । प्रणिगदनलेखनवेलायाः अनन्तरमपि +2 स्तरीयाः संस्थाः अतितमां ऐधन्त । १९७९ तमे वर्षे तासां संख्या ५२०, अद्य १,३०० संस्थाः सन्ति । अर्सू समितेः अन्यतमा संसूचना 'एकस्य पूर्णावधिकस्य अध्यक्षस्य नियुक्तिः भवतु पदवीपूर्वशिक्षणमण्डल्याः कृते' इति । १९८४ तम वर्षस्य मार्च्मासे मम तत्र नियुक्त्या उक्ता संसूचना कार्यान्विता जाता । समित्यध्यक्षत्वेन लब्धानि साक्षात्करणानि पूर्णावधिकाध्यक्षत्वेन लब्धेभ्यः तेभ्यः किञ्चिदिव भिन्नानि ।

प्रतिवर्षमपि पदवीपूर्वशिक्षणपरीक्षासु छात्राणां साफल्यरेखा अधोमुखी दृश्यते । परिणामतः प्रतिवर्षमपि अनुग्रहाङ्कानां दानस्यावश्यकता सम्मुखी

भवति । अपिच एतस्मिन् सन्दर्भे अध्यापकस्यात्र उत्तरदायितायाः मौल्य-मापनप्रक्रियायाश्च परिगणना नैव कृता ॥

अस्य वर्षस्य (१९८६) एप्रिल्मासे पदवीपूर्वशिक्षणस्तरे पाठ्यपुस्तकानां राष्ट्रीयीकरणं कर्नाटकसर्वकारेण निर्धारितम् । पदवीपूर्वशिक्षण-मण्डली च अस्य निर्धारस्य कार्यान्वयने पदवीपूर्वशिक्षकसमुदाय एव शैक्षणिकनेतृतां जनयितुं कृतनिर्णया । अचिरात् शिक्षकाणां स्वयंप्रेरिताः सङ्घटनाः वर्तन्ते इति सुदैवकृतमिदम् । आधुनिकं वैषयिकं वैधानिकं च ज्ञानं समुपयुज्य नूतनानि पुस्तकानि निर्मातुं तासां सङ्घटनानां संप्रवेशः अस्माभिः कारितः । एनां योजनां यावच्छक्यं परिनिष्ठितं कर्तुं आर्थिकी तान्त्रिकी च सामग्री मण्डल्या प्रदत्ता । एवं वयं आङ्गल–कन्नड–संस्कृत-उर्दू–हिन्दी–मराठी–तमिळु–मलयाळं–पर्षियन्–अराबिक् भाषासु पाठ्यपुस्तकानां निर्माणं आरब्धवन्तः ।

मैसूरुनगर्यां १–११–११८६ तः २१–११–१९८६ पर्यन्तं समायोजिते कार्यागारे प्रस्तुतं पाठ्यपुस्तकं सिद्धं कृतम् । पुस्तकं प्रयोजन-वत्तरं सन्दर्भस्पन्दि च भवतु इत्युद्देशेन अस्य पुस्तकस्य निर्माणे कर्नाटक-राज्यस्य विविधप्रदेशानां पदवीपूर्वस्तरशिक्षणनिरताः अध्यापकाः विश्वविद्या-निलयप्राध्यापकाः अन्यासां संस्थानां विद्वांसश्च संप्रवेशिताः ।

मैसूरुनगरस्थं भारतीयभाषासंस्थानं किल अस्मिन् कार्ये पदवीपूर्व शिक्षमण्डल्यै सहयोगं दातुं पुरः आगतमिति मयाऽत्र अभिधातव्यमस्ति । इदं अतीव सन्तोषप्रदम् । पुस्तकनिर्माणाय अपेक्षिता वैचक्षणी भारतीय-भाषासंस्थानाल्लब्धा । कार्यागारप्रचालने सहकारश्च प्राप्तः । वस्तुतः अध्यापयन्तः शिक्षकाः स्वैः पाठनीयस्य पुस्तकस्य निर्माणाय प्रायः ऐदम्प्राथम्येन स्वयं प्रेरणया एकत्रागताः ।

अध्यापकानां विद्यार्थिनां च आवश्यकताः पूरयितुं अपेक्षितैः अभ्यसनीयांशैः युक्तमिदं पुस्तकं भविष्यति, अत्र संचिताः विषयाः आसक्तिजनकाः कुतूहलप्रदाश्च सन्ति इति आशासे ।

संस्कृतस्य अध्यापनं च फलप्रदं तोषदायकं च कर्तुं सुमार्गे प्रथमं पदविन्यसनं भवतीदं पुस्तकं इति अहं विश्वसिमि ॥

डि. वि. अर्स्.

——

## कृतज्ञतासमर्पणम्

एतस्मिन् पुस्तके उपयुक्तानां पाठानां मूललेखकेभ्यः संस्कृतानुवादकेभ्यः प्रकाशकेभ्यश्च हार्दं कार्तज्ञ्यं समर्प्यते ॥

——

# प्रास्ताविकम्

पदवीपूर्वशिक्षणस्य प्रथमवर्षीयं पाठ्यपुस्तकं अध्यापकानां विद्यार्थिनां च बृन्दाय समर्पयितुं महान् प्रमोदः जायते ।

गते वर्षे कर्नाटकराज्यसर्वकारः पाठ्यपुस्तकानां राष्ट्रियीरणं कर्तुं निर्णीतवान् । तदनुसारेण पदवीपूर्वशिक्षणमण्डली नूतनतया परिष्कृतानि पुस्तकानि सिद्धानि कर्तुं समितीः अरचयत् ।

संस्कृतपाठ्यपुस्तकसमितिः पूर्वनिश्चितं पाठ्यक्रमं भारतीयभाषासंस्थानेन दत्तं मार्गदर्शनं, पदवीपूर्वशिक्षणमण्डल्याः सूचनाश्च हृदये निधाय पाठानां चयने प्रवृत्ता । संस्कृतभाषायाः साहित्यं विपुलं विशालं वैविध्यमयं च । चतुस्सहस्रवर्षेभ्योऽप्यधिका प्राचीनता अस्याः । अद्यापि विद्यमानैः विद्वद्भिः कृताः क्रियमाणाश्च कृतयः विद्योतन्ते । अतः समितिः साहित्यस्य नाना-प्रकारेषु श्रेष्ठान् भागान् संगृह्य विद्यार्थिभ्यः उपहर्तुं निरणयत् ।

सविस्तरपाठ्यविभागे त्रयाणां नाटकानां अङ्कत्रयं सङ्गृह्य दत्तम् । वस्तुबाहुल्यं वीक्ष्य, अङ्कत्रयमेव पर्याप्तमिति समित्या निश्चितम् । अविस्तर-पाठ्यभागे कालिदासस्य नाटकयोः द्वे कथे वर्तेते । एका कथा आधुनिक-पण्डितविरचिता, एकश्च विज्ञानविषयकः प्रबन्धः अस्मिन् भागे विद्यते ।

पदवीपूर्वस्तरीयाणां विद्यार्थिनां पठनाय विस्तरेण गाम्भीर्येण च अर्हाः पाठाः सविस्तरपठ्यपुस्तके निवेशिताः । पाठनकालावधिं दृष्टौ निधाय

लघ्वी पीठिका, पाठानन्तरं टिप्पणी, ततः अभ्यासाश्च उपकल्पिताः। पाठानन्तरं गृहेषु अभ्यासाय च प्रश्नविशेषाः दत्ताः। पृथक्तया शिक्षकेभ्योऽपि सूचनाः दीयन्ते अत्रैव पुस्तके। यासामनुसारेण पाठने विद्यार्थिनः सुसंस्कृतज्ञानं यथार्हं प्राप्नुवन्ति इति दृढं वयं विश्वसिमः।

एतादृशस्य उत्तमस्य पाठ्यपुस्तकस्य निर्माणे अवकाशं पदवीपूर्व-शिक्षणमण्डली अकल्पयत् इति तस्याः अध्यक्षाय श्री डि. विजयदेवराजअर्स् महाशयाय आस्माकं कृतज्ञता वक्तव्या। भारतीयभाषासंस्थानस्य साहाय्यं सहकारः सहयोगश्च अस्य पुस्तकस्य शीघ्रनिर्माणसिद्धौ निदानम्। भारतीय-भाषासंस्थानस्य निर्देशकाय डा. देवीप्रसन्नपट्टनायकमहोदयाय अन्येभ्यश्च अधिकारिभ्यः अस्माकं कार्तज्ञ्यं अर्पयामि।

समितेः सदस्याः पञ्चदशदिनपर्यन्तं पुस्तकं पूर्णतया संसिद्धं कर्तुं दिवारात्रं अश्राम्यन्। भाषायां श्रद्धा, विद्यार्थिषु प्रेम, उत्तमं पाठ्यपुस्तकं वर्ततां इति दृढसङ्कल्पश्च समितेः सदस्यानां मूलप्रेरण इति विवक्षामि। प्रत्यक्षं च साहाय्यं कृतवतां सर्वेषां उपकारस्मरणं कृत्वा, अध्यापकवर्गः विद्यार्थिवृन्दं च पुस्तकस्य हार्दं स्वागतं करिष्यतीति विश्वसिमि।

एच्. पि. मल्लेदेवरु
अध्यक्षः, संस्कृतपठ्यपुस्तक समितिः

---

# शिक्षकेभ्यः सूचनाः

पदवीपूर्वशिक्षणस्तरे संस्कृतबोधनस्य इमे उद्देशाः सन्ति। यथा—

१) संस्कृतभाषायाः साहित्ये व्याकरणे च विद्यार्थिनां ज्ञानस्य उत्पादनं वर्धनं च।

२) संस्कृतभाषायाः अपारस्य शब्दकोशस्य परिचयो विद्यार्थिनः यथा स्यात् तथा काव्यादिबोधनम्।

३) संस्कृतसाहित्यस्य श्रेष्ठकृतीनां सौन्दर्यस्यास्वादने विद्यार्थिनां आसक्तिसमुत्पादनम्।

४) संस्कृतसाहित्यस्य कृतिरत्नानां द्वारा भारतीय संस्कृतेर्विषये ज्ञानसम्वर्धनम्।

५) भाषाध्ययने विचारप्रकटने च विद्यार्थिनां शक्तेरभिवर्धनम्।

एतान् उद्देशान् मनसि निधाय पाठ्यक्रमः पाठाश्च सञ्चिताः। तेषां विन्यसने च निर्दिष्टः क्रमः आश्रितः। अतः तत्सर्वमनुसृत्य पाठाः शिक्षकैः बोधनीयाः।

तत्र इमे विषयाः अवधानं अर्हन्ति—

१) ग्रन्थस्थपाठानां बोधनस्य आरम्भात् प्राक् अध्यापकैः विद्यार्थिनां संस्कृतभाषायाः महत्त्वं, सौन्दर्यं, वैशिष्ट्यं चाधिकृत्य बोधनीयाः।

२) पाठानां सर्वेषां पृथक्पृथक् पीठिका दत्ता, यस्यां ग्रन्थसम्बन्धिनः ग्रन्थकारसम्बन्धिनश्च मुख्याः विषयाः निरूपिताः। एतद्विषये ग्रन्थात् तथा इतरमूलेभ्यश्च विचारान् संगृह्य विद्यार्थिभ्यो बोधनीयम्।

३) व्याकरणज्ञानं संस्कृताध्ययने आवश्यकम्। अतः प्रथम-वर्षस्य व्याकरणपाठाः पुनरावर्तनीयाः। ततः एतद्वर्षस्य व्याकरणपाठाः बोधनीयाः॥

४) अध्ययनाय कियान् अवधिः (कियत्यो घण्टाः) लभ्यत इति सम्यगालोच्य पाठाः सविस्तरपठनाय अविस्तरपठनाय च निर्णीताः। अतः कमपि पाठं अविहाय बोधनं कर्तव्यम्।

५) नाटकानां पाठने साभिनयं अध्यापनं महते प्रयोजनाय कल्पते। संस्कृतोत्सववार्षिकोत्सवादिषु द्वित्राणां दृश्यानां रङ्गे प्रदर्शनायापि प्रोत्साहो देयः।

६) पाठनवेलायां गानशैली निरूपणीया।

७) पाठवेलायां संस्कृतमाध्यमेन विषयवर्णनाप्रयत्नः कर्तव्यः। छात्रेभ्योऽपि संस्कृतभाषया स्वभिप्रायान् प्रकटयितुं प्रेरणा अवकाशश्च दातव्यौ।

८) अविस्तरपाठाः अपि सम्यग्बोधनीयाः। विज्ञानविषयक-पाठस्य अन्ते सूचितानां ग्रन्थानां अवलोकनं आवश्यकम्। तत्र विद्यार्थिनश्च प्रेरणीयाः।

प्रश्नपत्रिकाकरणे मार्गदर्शिनी पत्रिका या ग्रन्थान्ते दत्ता, सा अवलोकनीया, अनुसरणीया च । व्याकरणविषयान् एकवाक्येन उत्तरणीयान् च प्रश्नान् विहाय, अन्येषां प्रश्नानां उत्तराणि संस्कृतभाषायामेव लेखितव्यानीति नियमो नास्ति । अतः तेषां प्रश्नानां उत्तराणि आङ्ग्लकन्नडादिभाषास्वपि लेखितव्यानि ।

९) विशेषावधानं पाठान्तदत्तेभ्यः अभ्यासेभ्यो देयम् । अभ्यासान् गृहे कर्तुं छात्राः चोदनीयाः ॥

---

# पुस्तकरचनां प्रति

शिक्षमाणस्य विद्यार्थिनः सामाजिक-मानसिक- प्रात्यक्षिकाभिवृद्धये भाषा नाम केन्द्रीयं साधनम् । भाषा-पाठ्यपुस्तकेषु प्रयुक्तायाः भाषायाः संवहनं सर्वेषामन्येषां विषयाणां विचारस्य संवहनशक्यता अवलम्बते । तस्माद् भाषापाठ्यपुस्तकानां संरचना, तत्रापि स्नातकपूर्वकक्ष्याणां कृते तत्संरचना, नूनं परिश्रमापेक्षिणी । साम्प्रतिके युगे विद्यार्थिनः भाषाध्ययने अनादरं दर्शयन्तीति अनुभवगोचरीभवति, बहूनां तद्विषये परीक्षासु वैफल्य-दर्शनात्, प्रतिभाशालिभिरपि भाषाविषये अनधिकगुणार्जनदर्शनाच्च । एवं च पुस्तकसंरचना अतितरां परिश्रमापेक्षिणीति वक्तव्यं भवति । पाठ्यं पुस्तकं तादृशीं किल अध्ययन-अध्यापनसामग्रीं कल्पयेत्, यादृशी विद्यार्थिनं स्वाध्ययनाविषयभूतायाः भाषायाः समर्थे प्रयोगे तथा शक्तं विदध्यात् यथा सः उत्तरोत्तरं दक्षतां च विन्देत । एतादृशी शक्तिः भाषाध्ययने सुयोजित-रीत्या प्रकल्पितेन पाठ्यवस्तुना एव सेत्स्यति । 'सुयोजिता रीतिः' किल सुयोजितपाठ्यपुस्तकाधीना । तादृशं पाठ्यपुस्तकं च नूतनम् अभिगमनमार्गं अपेक्षते । साम्प्रदायिकसमितिसरणिं परित्यज्य आंग्लाध्यापकानां संघस्य, कन्नडाध्यापकानां संघस्य चाभिप्रायम् अनुसृत्य, कार्यागारमार्गोऽनुसृतः । एतादृशे कार्यागारे भागं स्वीकृत्य अध्यापकाः प्रथमवर्ष-पि यु सि-पाठ्य-पुस्तकद्वयं कन्नडाङ्गलभाषयोः कृते रचितवन्तः । एतत्पुस्तकद्वयम् उत्तमत्वेन सर्वत्र श्लाघितम् । अनुभवशालिनः अध्यापकाः पाठप्रकोष्ठपरिस्थितेरनुगुणं पुस्तकं निर्मातुं नितान्तम् उपकृतवन्तः । न किमप्यन्यत् संफलतेव सफला भवति । कार्यागारमार्गः पुनराश्रितः, हिन्दी-उर्दु-मराठी-तमिळु-

मलयाळ–तेलुगु–संस्कृत–अराबिक्–पर्षियन्–भाषाणामपि पि यु सि–प्रथम-वर्षस्य पाठ्यपुस्तकानि च रचितानि । एतानि च प्रशंसाम् अविन्दन् । पदवीपूर्वशिक्षणाय सर्वेषु विद्यालयेषु इदानीम् एतानि पुस्तकानि उपयुज्य-मानानि सन्ति । नूतनदृष्ट्या निर्मितानां पुस्तकानाम् अध्यापने अध्याप-कानां सामर्थ्यम् उत्पादयितुं कोऽपि संशिक्षणाक्रमः तेषाम् आवश्यकः । पुस्तकं कियदपि उत्तमं भवतु नाम, यदि अध्यापकाः तत्कथम् उपयोक्तव्यम् इति न जानन्ति, तर्हि परिणामकारितया तत् उपयोक्तुं न शक्नुवन्ति । मैसूरुनगरस्थः रीजनल् कालेज् इत्याख्यः विद्यालयः पि.यु.सि. प्रथमवर्षीयस्य आंग्लपाठ्यपुस्तकस्य अध्यापने अध्यापकान् संशिक्षितान् विधातुं पुरः आगच्छत् । अस्मिन् संशिक्षणे चत्वारिंशदध्यापकाः भागवाहाः अभवन् । एवं संशिक्षिताः अध्यापकाः आंग्लाध्यापकसंघस्य साहाय्येन आंग्लाध्याप-केभ्यः कार्यागारणि संचालयन्तः सन्ति । अत्र प्रशंसनीयं किमिति चेत् एतानि कार्यागाराणि सर्वकारधनव्ययं विना, स्वप्रेरणया प्रचाल्यन्ते । किन्तु अलमित्यलम् । स्वप्रेरणाप्रयत्नाः उत्तरत्र शिथिलीभवेयुः । अतः कर्नाटकप्रशासनं पुरस्तात् आगत्य पदवीपूर्वशिक्षणमण्डल्या एकं विभागं रचयेत्, यो हि विभागः पदवीपूर्वविद्यालयशिक्षकाणां कृते विविधेषु विषयेषु संशिक्षणशिबिराणि चालयेत् ।

विद्योत्कर्षानुगमने एतानि पुस्तकानि प्रशंसार्हाः प्रयत्नाः । उत्कर्ष-प्राप्तौ प्रयत्नान् अनुस्यूतान् कर्तुं प्रतिक्रियाज्ञानाय, तत्प्रति पुनः परिवर्तना-दिद्वारा संवृद्धये च पुनः एको विभागः रचयितव्यो भवति । अन्यथा पदवीपूर्वशिक्षणमण्डल्याः अद्यतनः उद्योगिवर्गः अधुनातनं स्तरम् एव रक्षितुं न पर्याप्तं, का कथा उन्नततराणां स्तराणाम् आरोहणस्य ?

आवर्तितां पाठ्यविषयावलीम् आधारीकृत्य पि. यु. सि.–द्वितीयवर्षस्य

पाठ्यपुस्तकानि प्रथमवर्षपुस्तकवदेव रचितानि । एतानि च अध्यापकानां विद्यार्थिनां च आदरं प्राप्स्यन्ति पूर्ववदेव इति श्रद्धामयी अस्मन्निरीक्षा ।

पदवीपूर्वशिक्षणमण्डली कृतज्ञा वर्तते सर्वेषाम् अध्यापकानां, ये तावद् विविधानां पाठ्यपुस्तकानां सम्पादनसमितिषु सदस्याः भूत्वा उपकृतवन्तः । अपि च सम्पूर्णसहकारप्रदानाय अधोनिर्दिष्टानां संस्थानां व्यक्तीनां च उपकारं सकार्तज्ञ्यं स्मरति पदवीपूर्वशिक्षणमण्डली ।

1) The British Council of India.
2) Dr. D. P. Pattanayak, Director, and Staff, C.I.I.L., Mysore.
3) Regional College of Education, Mysore.
4) Dr. A. K. Sharma.
5) Dr. Varma.
6) Prof. Vishvanath.
7) The Forum of College English Teachers, Bangalore.
8) College Kannada Adhyapakara Okkuta.

इति

अध्यक्षः

पदवीपूर्वशिक्षणमण्डली.

## "धन्यमप्रतिबोधनम्"

(स्वप्नवासवदत्तस्य पञ्चमोऽङ्कः)

॥ पीठिका ॥

संस्कृतकाव्यं द्विविधम्-श्रव्यं दृश्यं चेति। तत्र श्रव्यकाव्यं पद्यं, गद्यं, चम्पूः इति नामभिः प्रसिद्धम्। दृश्यकाव्यं रूपकमित्याहुः। रूप्यतेऽभिनयैः यत्र वस्तु तद्रूपकम्। तच्च दशविधम्—

नाटकं सप्रकरणं भाणः प्रहसनं डिमः।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा दश॥

अस्मिन् देशे दृश्यकाव्यं अत्यन्तप्राचीनकाले एव समुदभूदिति ऊहा वर्तते किल! परंतु–ऊहा एषा वादग्रस्तैव। प्रप्रथमरूपकं किमासीत्? कुत्र वा प्रदर्शितम्? कः कविः प्रणीतवान् प्रथममेतत्? तत्समयश्च कः? इत्यादयः प्रश्नाः सहजतयैवोद्भवन्ति। निर्दिष्टान्युत्तराणि एतत्प्रश्नानां न लभ्यन्त एव।

भरतमुनेः नाट्यशास्त्रे नाटकोत्पत्तिवर्णना एवं दृश्यते। देवाः समाजग्मुः चतुर्मुखब्रह्मणः समक्षं प्रार्थयन्त च तम् अधर्मोन्मूलनहेतु साधनमेकं प्रदातुम्। येन साधनेन पामराः अपि धर्मनिरता भवेयुः इति। तेषां प्रार्थनामङ्गीकृत्य स ब्रह्मा ऋग्वेदात्पाठ्यं, सामवेदात् सङ्गीतं, यजुर्वेदादभिनयं अथर्ववेदाद्रसं चोद्धृत्य रूपकमेकं रचितवान्। देवानां पुरः तद्रूपकं प्रदर्शितं च। तद्दृष्ट्वा ते देवाः परां मुदं अवापुः इति। अनेन स्पष्टं भवति, रूपकं जनरञ्जनाय धर्मबोधनाय च समुदभूदिति। कालक्रमेण तादृशानि रूपकाणि लिखितानि, प्रदर्शितानि चोत्सवकालेषु यज्ञयागादिकालेषु च यत्र यत्र जनौघाः मिलन्ति स्म।

केचन विवुधाः ब्रुवन्ति-अस्मिन् देशे यवनानाम् (Greeks) आगमनात्पूर्वं न किमपि रूपकं वर्तते स्म। तेषां प्रभावादेव रूपकमुद्भूतमिति। असावभिप्रायः सत्याद्दूरः। यतः यवननाटकानां संस्कृतरूपकाणां च न किमपि साम्यं अस्तीति बहवः विद्वांसः साधारं स्वेषु स्वेषु प्रबन्धेषु दर्शितवन्तः, तद्विवरणं चात्र अप्रस्तुतमेवेति मन्महे।

अत्र ब्रूमः—ऋग्वेदे संवादसूक्तानि बहूनि सन्ति येषु दृश्यकाव्यस्वरूपं पश्यामः। शुक्लयजुर्वेदस्य वाजसनेयसंहितायां "शैलूष" शब्दः नटपरः दृश्यते। केषुचिदारण्यकेषु मनोरञ्जकानि रूपकाणि छात्रेभ्यः निषिद्धानीति दृश्यते। महाभाष्ये 'शौभनिकाः' 'कंसवधं' 'बलिबन्धम्' इत्यादिरूपकाणि प्रदर्शितवन्तः इत्युल्लेखो दृश्यते। वाल्मीकिरामायणे आदिकाव्ये कुशीलवाः नटाः नर्तकाः नाटकं नृत्यम् इत्यादयः शब्दाः मनोरञ्जकं रङ्गप्रदर्शनं सूचयन्ति। एवमेव महाभारते हरिवंशे च सुस्पष्टमेव लिखितमस्ति रामायणकथा दर्शितेति। दिग्घनिकाये बम्मजालसुत्ते अवदानशतके च जनविनोदार्थं रूपकाणि प्रदर्शितानीत्युल्लेखो दृश्यते। कौटिलीयार्थशास्त्रे नाटकमण्डलीपरिपालनाक्रमः निरूपितः। वात्स्यायनस्य कामशास्त्रे च केषांचिन्नाट्यशास्त्रप्रवीणानां नामान्युदाहृतानि। परं तु तेषां कृतयः न लब्धाः। दृश्यकाव्यपरम्परा च प्राचीनतमा। भासप्रणीतानि नाटकानि यदि विविच्यन्ते, तर्हि एतानि रूपकोच्छ्रायकाले लिखितानीति स्पष्टमेव ज्ञायते। भासानन्तरं कालिदासः भवभूतिः इत्यादयः कवयः रूपकाण्यनेकानि विरच्य परां कीर्तिमवापुः॥

———

## कविकाव्यपरिचयः

भासमहाकविः दशोत्तरैकोनविंशतिशततम (१९.१०) वर्षपर्यन्तं क्वचित्क्वचिदुल्लेखमात्रेणैव ज्ञात आसीत्। तस्मिन् वर्षे महामहोपाध्यायः गणपतिशास्त्री केरळदेशे पद्मनाभपुराख्यग्रामस्य मणिलिक्कारमठे कृपात् कानिचित् तालपत्राणि उद्धृत्य तानि संशोध्य स्वप्नवासवदत्तं नाम रूपकमेकं प्रकटितवान्। एतत्पूर्वमेव नरसिंहाचार्यमहोदयेन स्वप्नवासवदत्तस्य प्रतिरेका कर्णाटके दृष्टा, न तु प्रकटिता इत्यपि श्रुतं भवति। गणपतिशास्त्री तु स्वप्नवासवदत्तनाटकेन सह लब्धान्यन्यानि च रूपकाणि संशोध्य विविच्य च, ःषु स्थितान् कतिपयसाम्याशान् परिगणयन् तान्यपि भासस्यैवेति उदघोषयत्। तदारभ्य पौरस्त्यपाश्चात्यविमर्शकाः एतानि रूपकाणि भासस्य? उत न? इति वादविवादनिरताः सन्ति।

यथा इतरकविविषये तथैव अस्मिन्नपि कालनिर्णयोऽद्यापि नास्त्येव। यतः कविः कुत्रापि स्वविषयान् नोल्लिखति। भासरूपकाण्येव समीचीनं विविच्य केचन विद्वांसः ब्रुवन्ति — सः वैदिकमतपक्षपाती यज्ञयागादीन् आदृतवान्। बौद्धमतं जैनमतं च न बहुमतवान्। तद्रूपकाणां कतिपयनान्दीश्लोकाः विष्णुपराः। अतो वैष्णवोऽयमिति। एते विचाराः अद्यापि समस्याभूता एव वर्तन्ते।

कवेः कालनिर्णयविषये एवं वक्तुं शक्यते कविकुलगुरुः कालिदासः स्वीयमालविकाग्निमित्राख्यनाटके 'प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं परिषदो बहुमानः?' इत्युक्त्वा भासे निजगौरवं दर्शयति। कालिदासस्य समयः क्रिस्ताब्दचतुर्थशतमानोत्तरार्धः पञ्चमशतमानपूर्वार्धः वा इति परिगणयन्ति केचन विद्वांसः। अतः भाससमयः तत्पूर्व एव वक्तुं शक्यते।

शूद्रककवेः मृच्छकटिकाख्यं प्रकरणं, भासविरचितं चारुदत्त-

मवलम्ब्य प्रणीतमिति कश्चनाभिप्रैति। अद्यतनविमर्शकैरुक्तं मृच्छकटिकं रचितं क्रिस्तपूर्वतृतीयशताब्दे। अतः भासकविः तत्पूर्वकालीन एवेति वक्तुं शक्यते इति। कौटिल्यः अर्थशास्त्रे आत्महत्याखण्डनप्रसङ्गे श्लोकमेकमुदाहरति—

"नवं शरावं सलिलैस्सुपूर्णं
सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य माभून्नरकं स गच्छेत्
यो भर्तृपिण्डस्य कृते न युध्येत्॥"

इति। तत्रैव "अपि इह श्लोकौ भवतः" इति च। एष च श्लोकः भासस्य प्रतिज्ञायौगन्धरायणे (iv-3) दृश्यते। भासः स्वस्य प्रतिमा-नाटके बार्हस्पत्यं अर्थशास्त्रं उदाहरति, न तु कौटिल्यार्थशास्त्रम्। प्रायशः कौटिल्यार्थशास्त्रं तदानीं न ग्रथितम्, न वा प्रथितं स्यात्।

चन्द्रगुप्तः क्रिस्तपूर्वं ३२२ तमे वर्षे सिंहासनमारुरोहेति निर्णीतमेव। कौटिल्यस्तु चन्द्रगुप्तमौर्यस्यामात्यः इति प्रसिद्धमेव। अतः भासः क्रिस्ताब्दचतुर्थशतमानसमये आसीदिति वक्तुं शक्यते।

भासप्रणीतानीति आख्यातानि रूपकाणि त्रयोदश—

| रूपकनामानि | आकरः |
|---|---|
| अभिषेकनाटकम्<br>प्रतिमानाटकम् | रामकथा |
| मध्यमव्यायोगः<br>दूतवाक्यम्<br>दूतघटोत्कचम्<br>कर्णभारम्<br>ऊरुभङ्गम्<br>पञ्चरात्रम् | कौरवपाण्डवकथा |

| रूपकनामानि | आकरः |
|---|---|
| बालचरितम् | कृष्णकथा |
| प्रतिज्ञायौगन्धरायणम्<br>स्वप्नवासवदत्तम् | बृहत्कथा |
| अविमारकम्<br>चारुदत्तम् | स्वकल्पितकथाद्वयम् |

यज्ञफलं नाटकं भासेन न विरचितमिति बहूनामभिप्रायः ।

कतिपयसाम्यांशाः एतेषु रूपकेषु दृश्यन्ते :—

१) 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' एष निर्देशः एतेषु रूपकेषु दृश्यते । अन्येषां रूपकेषु तु 'नान्द्यन्ते सूत्रधारः' इत्येतावदेव दृश्यते ।

२) पीठिकाभागः 'स्थापना' इति प्रायोऽत्र भण्यते । अपिच नियमेन 'अये किं नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते ? अङ्ग ! पश्यामि ।' इति दृश्यते ।

३) भरतवाक्यं प्रायः सर्वत्र समानम् ।

४) मङ्गलश्लोकः प्रायः मुद्रालङ्कारयुक्तः सर्वत्र । मुद्रालङ्कारस्य लक्षणं तु-

"सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः" इत्युक्तम् ।

५) कवेर्नाम कुत्रापि नास्त्येतेषु नाटकेषु । नापि तस्य प्रशंसा ।

६) कानिचिद्वाक्यानि पदगुच्छानि च सर्वत्र पुनः पुनः दृश्यन्ते ।

७) प्रतिमासाम्यं (Common imagery) आकाशभाषितं, पताका-स्थानम् इत्यादयः सहृदयान् रञ्जयन्ति ।

८) आर्षप्रयोगाः कतिपयस्थलेषु दृश्यन्ते ।

९) भरतः स्वस्य नाट्यशास्त्रे अग्नि-मरण-युद्ध-जलानां रङ्गे आनयनं निषेधितवान् । भासस्तु तन्नैवानुसरति ।

१०) 'निष्क्रम्य, प्रविश्य' इत्यादिनिर्देशेन रूपककथायाः सत्वरसञ्चारं सूचयति ।

११) प्रायः एतेषु रूपकेषु रङ्गनिर्देशनमत्यल्पम् ।

१२) एतेषु रङ्गयोग्यत्वं चास्तीति दृश्यते ॥

---

## पात्रपरिचयः

उदयन :— वत्सदेशस्य राजा ।

विदूषक : – उदयनस्य सखा । वसन्तकः इति तस्य नाम ।

काञ्चुकीय :—अन्तःपुरपालकः ।

वासवदत्ता—उदयनस्य पत्नी । आवन्तिका इति तस्याः प्रच्छन्नं नाम ।

मधुकरिका<br>पद्मिनिका } —पद्मावत्याः चेट्यौ

चेटी – पद्मावत्याः दासी ।

## — उल्लिखितपात्राणि —

पद्मावती—उदयनस्य द्वितीयपत्नी । दर्शकमहाराजस्य स्वसा ।

दर्शक :—मगधदेशराजः ।

यौगन्धरायण :—उदयनस्य अमात्यः ।

रुमण्वान्—उदयनस्य अपरः सचिवः ।

आरुणि :—उदयनराज्यापहारी ।

अवन्त्यधिपति :—कौशाम्बीमहाराजः । प्रद्योतःमहासेनः इति तस्य नामनी ।

## प्रसक्ताङ्ककथासारांशः

स्वप्नवासवदत्तस्य पञ्चमोऽयमङ्कः सुप्रसिद्धः। सम्पूर्णनाटकस्य शीर्षिकां अयमङ्कः समर्थयति। नाटकं नाटकप्रणेतारं च प्रथयत्यपि। अस्याङ्कस्य प्रवेशकेन 'वत्सराजवधूः पद्मावती शीर्षवेदनया क्लिन्ना। तच्छमनार्थं वासवदत्ता समुद्रगृहं प्रेषयितव्या यत्र पद्मावती शेते' इवि सूच्यते। चेट्या विदूषकोऽपि जानात्येनं विषयम्। तेन उदयनोऽप्युक्तः 'पद्मावती अस्वस्था समुद्रगृहके शयाना वर्तते' इति। ततः उदयनः सविदूषकः समुद्रगृहमागच्छति। तत्र पद्मावती नैवागता। पद्मावतीं निरीक्षमाणौ तत्रैव तौ वर्तेते। उदयनः मनोव्यथोपशमनाय शय्यामधिशेते। विदूषकोक्तकथां शृण्वन्नेव स्वपिति च। विदूषकस्तु तदालोक्य आच्छादनार्थं प्रावारकमेकमादायागन्तुं समुद्रगृहात् निर्गच्छति।

तत्समकालमेव वासवदत्ता समुद्रगृहं आगच्छति। तत्र शयने पद्मावत्येव सुप्तेति मत्वा पार्श्वे उपविश्य, पश्चात् तत्पार्श्वे स्वपिति च। तत्क्षणं उदयनः उत्स्वप्नायते—'हा वासवदत्ते!' इति। एतत् श्रुत्वा वासवदत्ता चकिता भवति।

स्वप्ने एवोदयनः पश्चात् पृच्छति, उत्तरं चाह वासवदत्ता। एवं सति, कोऽप्यात्मानं पश्येदिति, तत्परं प्रमादो मा भूदिति चालोच्य शय्याप्रलम्बितं आर्यपुत्रस्य हस्तं शयनीये आरोप्य सा निर्गच्छति त्वरया।

उदयनस्तु झटित्युत्थाय तामनुसृत्य द्वारपक्षेण ताडितो भूत्वा प्रतिनिवर्तते। विदूषकः तत्रागत्य उदयनस्य वासवदत्ताभ्रमनिरसनाय परं

यतते । परंतु उदयनस्य मनसो 'यदि वासवदत्ता जीवेदि'तिशङ्का न तिरोभवति । दर्शकराजस्य काञ्चुकीयः तदा आगत्य प्रकटयति–' रुमण्वता महान्ति बलानि सङ्कलितानि । आरुणिमभिघातयितुं उदयनमेव स प्रतीक्षते इति । उद्विग्नोऽप्युदयनोऽयं तत्कार्यनिरतो भवति–इति ॥

———

## "धन्यमप्रतिबोधनम्"

(ततः प्रविशति पद्मिनिका)

पद्मिनिका - मधुकरिके ! मधुकरिके ! आगच्छ तावत् शीघ्रम् । [महुअरिए ! महुअरिए आअच्छ दाव सिग्घं ।]

(प्रविश्य)

मधुकरिका—हला ! इयमस्मि । किं क्रियताम् ?
[हळा ! इआम्हि । किं करीअदु ?]

पद्मिनिका—हला ! किं न जानासि त्वं, भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति [हळा ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावदि सीसवेदणाए दुक्खाविदेत्ति ।]

मधुकरिका—हा धिक् । [हद्धि]

पद्मिनिका—हला ! गच्छ शीघ्रम् । आर्यामावन्तिकां शब्दापय केवलं भर्तृदारिकायाः शीर्षवेदनामेव निवेदय । ततः स्वयमेवागमिष्यति । [हळा ! गच्छ षिग्घं, अय्यं आवन्तिअं सद्दावेहि । केवळं भट्टिदारिआए शीसवेणं एव्व णिवेदेहि । तदो सअं एव्व आगमिस्सदि ।]

मधुकरिका—हला ! किं सा करिष्यति ? [हळा ! किं सा कारिस्सदि ?]

पद्मिनिका—सा खलु इदानीं मधुराभिः कथाभिः भर्तृदारिकायाः शीर्षवेदनां विनोदयति । [सा हु दाणिं महुराहि कहाहि भट्टिदारिआए सीसवेदणं विणोदेदि ।]

मधुकरिका—युज्यते । कुत्र शयनीयं रचितं भर्तृदारिकायाः ? [जुज्जइ । कहिं सअणीयं रइदं भट्टिदारिआए ?]

पद्मिनिका—समुद्रगृहके किल शय्याऽऽस्तीर्णा। गच्छेदानीं त्वम्। अहमपि भर्त्रे निवेदनार्थं आर्यवसन्तकमन्विष्यामि। [समुद्दगिहके किल सेज्चान्चिण्णा। गच्छ दाणिं तुवं। अहं वि भट्टिणो णिवेदणत्थं अय्यवसंतअ अण्णेसामि।]

मधुकरिका—एवं भवतु। [एवं होदु।] (निष्क्रान्ता)

पद्मिनिका—कुत्रेदानीं आर्यवसन्तकं पश्यामि? [कहिं दाणिं अय्यवसंतअं पेक्कामि?]

(ततः प्रविशति विदूषकः)

विदूषक:—अद्य खलु देवीवियोगविधुरहृदयस्य तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहणसमीर्यमाणोऽत्यन्तसुखावहे मङ्गलोत्सवे मदनाग्निदाहः अधिकतरं वर्तते। (पद्मिनिकां विलोक्य) अयि पद्मिनिका! पद्मिनिके! किमिह वर्तते? [अज्जखु देवीविओआविहुरहिअअस्स तत्तहीदो वच्छराअस्स पदुमावदी पाणिग्गहणसमीरिअमाणो अच्चंन सुहावहेमङ्गळोसवे मदाणग्गिदाहो अहिअदरं वड्ढइ। अयि पदुमिणिआ! पदुमिणिए! किं इह वत्तदि?]

पद्मिनिका—आर्यवसंतक! किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति? [अय्य वसंतअ। किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीववेदणाए दुक्खाविदेत्ति?]

विदूषकः—भवति! सत्यं न जानामि। [भोदि! सच्चं ण जाणामि।]

पद्मिनिका—तेन हि भर्त्रे निवेदयैनाम्। यावदहमपि शीर्षानुलेपनं त्वरयामि।

[तणे हि भट्टिणो णिवेदेहि णं जाव अहं वि सीसाणुलेवणं तुवारेमि]

विदूषकः—कुत्र शयनीयं रचितं पद्मावत्याः!

[कहिं सअणीअं रइदं पदुमावदिए?]

पद्मिनिका - समुद्रगृहके किल शय्याऽऽस्तीर्णा ।
[समुद्दगिहके किळ सेज्जाश्थिण्णा ।]

विदूषकः—गच्छतु भवती । यावदहमपि तत्रभ े निवेदयिष्यामि ।
[गच्छतु भोदी । जाव अहंवि तत्तहोदो णिवेदइस्सं ।]

(निष्क्रान्तौ)

इति प्रवेशकः

(ततः प्रविशति राजा)

राजा- श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः ।
लावाणके हुतवहेन हृताङ्गयष्टिं
R10C तां पद्मिनीं हिमहतामिव चिन्तयामि ॥

(प्रविश्य)

विदूषकः—त्वरतां त्वरतां तावद् भवान् । [तुवरदु तुवरदु दाव भवं]

राजा – किमर्थम् ?

विदूषकः—तत्रभवती पद्मावती शीर्षवेदनया दुःखिता । [तत्तहोदी पदुमावदी सीसवेदणाए दुक्खिदा ।]

राजा—कैवमाह ?

विदूषकः—पद्मिनिकया कथितम् । [पदुमिणिआए कहिदं ।]

राजा—भोः ! कष्टम् ।

रूपश्रिया समुदितां गुणतश्च युक्तां
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।
पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
Rtoc पद्मावतीमपि तथैव समर्थयामि ॥ २ ॥

अथ कस्मिन् प्रदेशे वर्तते पद्मावती ?

विदूषकः—समुद्रगृहके किल शय्याऽऽस्तीर्णा । [समुद्दगिहके किळ सेज्जात्थिण्णा ।]

राजा – तेन हि तस्य मार्गमादेशय ।

विदूषकः—एतु एतु भवान् [एदु एदु भवं]

(उभौ परिक्रामतः)

विदूषकः—इदं समुद्रगृहकम् । प्रविशतु भवान् । [इदं समुद्दगिहकं । पविसदु भवं ।]

राजा—पूर्वं प्रविश ।

विदूषकः—भोः तथा । [भो ! तह ।] (प्रविश्य) अविधा ! तिष्ठतु तिष्ठतु तावद् भवान् । [अविहा ! चिट्ठदु चिट्ठदु दाव भवं ।]

राजा—किमर्थम् ?

विदूषकः—एष खलु दीपप्रभावसूचितरूपः वसुधातले परिवर्तमानः काकोदरः । [एसो खु दीवप्पभावसूइदरूवो वसुधातळे परिवत्तमाणो अअं काओदरो ।]

राजा—(प्रविश्यावलोक्य सस्मितं) अहो । सर्पव्यक्तिः वैधेयस्य ।

ऋज्वायतां हि मुखतोरणलोलमालां
भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख सर्पम् ।
मन्दानिलेन निशि या परिवर्तमाना
किञ्चित् करोति भुजगस्य विचेष्टितानि ॥

विदूषकः (निरूप्य) सुष्ठु भवान् भणति । न खल्वयं काकोदरः । [सुष्ठु भवं भणादि । ण हु अअं काओदरो ।] (प्रविश्य-अवलोक्य) तत्रभवतां पद्मावती इहागत्य निर्गता भवेत् । [तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे ।]

राजा – वयस्य ! अनागतया भवितव्यम् ।

विदूषकः— कथं भवान् जानाति ? [कहं भवं जाणदि]

राजा—किमत्र ज्ञेयम् ? पश्य

शय्या नावनता तथाऽऽस्तृतसमा
न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं
शिर्षाभिघातौषधैः ।
रोगे दृष्टिविलोभनं जनयितुं
शोभा न काचित् कृता
प्राणी प्राप्य रुजा पुनर्न शयनं
शीघ्रं स्वयं मुञ्चति ॥ ४ ॥

विदूषकः तेन ह्यस्यां शय्यायां मुहूर्तकमुपविश्य तत्रभवतीं प्रतिपालयतु भवान् । [तेण हि इमस्सिं सय्याए मुहुत्तअं उवविसिअ तत्तहोदिं पडिवाळेदु भवं ।]

राजा—बाढम् । (उपविश्य) वयस्य ! निद्रा मां बाधते । कथ्यतां काचित् कथा ।

विदूषक—अहं कथयिष्यामि । हूँ इति करोत्वत्रभवान् । [अहं कहयिस्सं । हुँत्ति करेदु अत्तभवं ।]

राजा—बाढम् ।

विदूषकः—अस्ति नगरी उज्जयिनी नाम । तत्र अधिकरमणीयानि उदकस्नानानि वर्तन्ते किल ! [अस्थि णअरी उज्जइणी णाम । तहिं अहिअ रमणीआणि उदअ ह्णाणानि वत्तंति किळ !]

राजा—कथं उज्जयिनी नाम ?

विदूषकः—यद्यनभिप्रेतैषा कथा अन्यां कथां कथयिष्यामि । [जइ अणभिप्पेदा एसा कहा अण्णं कहइस्सं ।]

राजा—वयस्य ! न खलु नाभिप्रेतैषा कथा, किंतु–

स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।
बाष्पं प्रवृत्तं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥ ५ ॥

अपि च–

बहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥ ६ ॥

विदूषकः—भवतु, अन्यां कथयिष्यामि । अस्ति नगरं ब्रह्मदत्तं नाम । तत्र किल राजा काम्पिल्यो नाम । [भोदु, अण्णं कहइस्सं । अत्थिणअरं ब्रंहदत्तं णाम । तहिं किळ राजा कंपिळ्ळो णाम ।]

राजा — किमिति ? किमिति ?

विदूषकः — (पुनः तदेव पठति)

राजा—मूर्ख ! राजा ब्रह्मदत्तः, नगरं काम्पिल्यं इत्यभिधीयताम् ।

विदूषक—किं राजा ब्रह्मदत्तः ? नगरं काम्पिल्यम् ? (किं राआ ब्रह्मदत्तो णअरं कंपिळ्ळं ?)

राजा—एवमेतत् ।

विदूषक—तेन हि मुहूर्तकं प्रतिपालयतु भवान् यावदोष्ठगतं करिष्यामि [तेण हि मुहुत्तअं पडिवाळेदु भवं । जाव ओट्ठगअं करिस्सं । राजा ब्रह्मदत्तः, । नगरं काम्पिल्यम् । [राआ बम्हदत्तो, णअ काम्पिल्यम् । [राआ बम्हदत्तो, णअरं कम्पिळ्ळं ।] (इति बहुशः तदेव पठित्वा) इदानीं श्रृणोतु भवान् । अयि सुप्तोऽत्रभवान् । अतिशीतलेयं वेला । आत्मनः प्रावारं गृहीत्वा आगमिष्यामि । [इदाणिं सुणादु भवं । अयि ! सुत्तं अत्तभवं । अदिसीदळा इअं वेळा । अत्तणो पावरअं गण्हिअ आअमिस्सं ।] (इति निष्क्रान्तः)

(ततः प्रविशति वासवदत्ता आवन्तिकावेषेण चेटी च)

Maid चेटी—एतु एत्वार्या । दृढं खलु भर्तृदारिका शीर्षवेदनया दुःखिता [एदु एदु अय्या । दिढं खु भट्टीदारिआ सीसवेदणा दुक्खाविदा ।]

वासवदत्ता—हा धिक् ! कुत्र शयनीयं रचितं पद्मावत्याः ? [हद्धि कहिं सअणीअं रइदं पदुमावदीए ?]

चेटी — समुद्रगृहके किल शय्याऽऽस्तीर्णा । [समुद्दगिहके किळ सेज्जात्थिण्णा ।]

वासवदत्ता—तेन हि अग्रतो याहि । [तेण हि अग्गदो याहि ।]

(उभे परिक्रामतः)

चेटी इदं समुद्रगृहकम् । प्रविशत्वार्या । यावदहमपि शीर्षानुलेपनं त्वरयामि । [इदं समुद्दगिहकं । पविसदु अय्या । जाव अहंवि सीसाणुळेवणं तुवारेमि ।]

Alas! How cruel is Lord Siva

वासवदत्ता—अहो अकरुणाः खल्वीश्वरा मे । विरहपर्युत्सुकस्य आर्यपुत्रस्य विश्रमस्थानभूतेयमपि नाम पद्मावती अस्वस्था जाता । यावत् प्रविशामि । [अहो अकरुणाक्खु इस्सरा मे । विरहपय्युस्सुअस्स अय्यउत्तस्य विस्समत्थाण भूदा इ अंमि णाम पदुमावदी अस्सत्था जादा । जाव पविसामि ]

(प्रविश्यावलोक्य)

अहो परिजनस्य प्रमादः । अस्वस्थां पद्मावतीं केवलं दीपसहायां कृत्वा परित्यजति । इयं पद्मावती अवसुप्ता । यावदुपविशामि । अथवा अन्यासनपरिग्रहेण अल्प इव स्नेहः प्रतिभाति । तदस्यां शय्यायां उपविशामि । [अहो परिजणस्स पमादो । अस्सत्थं पदुमावदिं केवळं दीवसहाअं करिअ परित्तजदि । इअं पदुमावदी ओसुत्ता । जाव उवविसामि । अहवा अण्णासणपरिग्गहेण अप्पो विअ सिणेहो पडिमादि । तां इयस्सिं सय्याए उववसामि ।]

(उपविश्य)

किंनु खल्वेतया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम् । दिष्ट्या अविच्छिन्नसुखनिःश्वासा । निवृत्तरोगया भवितव्यम् । अथवा एकदेशसंविभागतया शयनीयस्य सूचयति मामालिङ्गेति । यावच्छ-यिष्ये । [किं णु खु एदाए सह उवविसंतीए अज्ज पह्लादिदं वि अ मे हिअअं । दिट्ठिआ अविच्छिण्ण सुहणिस्सासा । णिव्वुत्तरोआए होदव्वं । अहव एअदेससंविभाअदाए सअणी-अस्स सूएदि मं आलिंगेहित्ति । जाव सइस्सं । ]

(शयनं नाटयति)

राजा—(स्वप्नायते) हा वासवदत्ते !

वासवदत्ता—(सहसोत्थाय) हं ! आर्यपुत्रः ! न खलु पद्मावती । किं नु खलु दृष्टाऽस्मि ? महान् खलु आर्ययौगन्धरायणस्य प्रतिज्ञाभारः मम दर्शनेन निष्फलः संवृत्तः । [हं अय्यउत्तो ! ण हु पदुमावदी । किं णुक्खु दिट्ठम्हि ? महंतो खु अय्यजोअंधरायणस्स पडिण्णाहारो मम दंसणेण णिप्फलो संवुत्तो ।]

राजा – हा ! अवन्तिराजपुत्रि !

वासवदत्त—दिष्ट्या स्वप्नायते खल्वार्यपुत्रः ! नात्र कश्चिज्जनः । यावन्मुहूर्तकं स्थित्वा दृष्टिं हृदयं च तोषयामि । [दिट्ठिआ सिविणाआदि खु अय्यउत्तो । णा एत्थ कोच्चि जणो । जा व मुहुत्तअं चिट्ठि अदिट्ठिं हिअअं च तोसेमि ।

राजा—हा प्रिये ! हा प्रियशिष्ये ! देहि मे प्रतिवचनम् ।

वासवदत्ता—आलपामि भर्तः ! आलपामि । [आळवामि भट्टा ! आळवामि ।]

राजा—किं कुपिताऽसि ? R४०(

वासवदत्ता—नहि नहि, दुःखिताऽस्मि । [णहि ण हि, दुक्खिदम्हि ।]

राजा—यद्यकुपिता, किमर्थं नालङ्कृताऽसि ?

वासवदत्ता—इतः परं किम् ? [इदो वरं किं ?]

राजा—किं विरचिकां स्मरसि ?

वासवदत्ता—(सरोषं) आ अपेहि, इहापि विरचिका । [आ अवेहि, इहावि विरचिआ ।]

राजा--तेन हि विरचिकार्थं भवतीं प्रसादयामि ।

(हस्तौ प्रसारयति)

वासवदत्ता चिरं स्थिताऽस्मि कोऽपि पश्येत् । तद् गमिष्यामि । अथवा शय्याप्रलम्बितं आर्यपुत्रस्य हस्तं शयनीये आरोप्य गमिष्यामि । [चिरं ठिदम्हि । को वि मं पेक्खे । ता गमिस्सं । अहव सय्यापळंबिअं अय्यउत्तस्स हत्थं सअवणीए आरोविआ गमिस्स हत्थं सअणीए आरोविअ गमिस्सं ।

(तथा कृत्वा निष्क्रान्ता)

राजा—(सहसोत्थाय) वासवदत्ते ! तिष्ठ तिष्ठ । हा धिक् !

निष्क्रामन् संभ्रमेणाहं द्वारपक्षेण ताडितः ।
ततो व्यक्तं न जानामि भूतार्थोऽयं मनोरथः ॥

(प्रविश्य)

विदूषकः—अयि ! प्रतिबुद्धोऽत्रभवान् । [अइ ! पडिबुद्धो अत्तभवं]

राजा—वयस्य ! प्रियमावेदये । धरते खलु वासवदत्ता ।

विदूषकः—अविधा वासवदत्ता । कुत्र वासवदत्ता ? चिरात् खलूपरता वासवदत्ता ! [अविहा वासवदत्ता । किंहि वासवदत्ता ? चिंरा खु उवरदा वासवदत्ता ।]

राजा—वयस्य ! मामैवम् ।

शय्यायामवसुप्तं मां बोधयित्वा सखे गता ।
R to L दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ॥

विदूषक—अविधा असंभावनीयमेतत् । आः उदकस्नानसङ्कीर्तनेन तत्रभवतां चिन्तयता सा स्वप्ने दृष्टा भवेत् । [अंविहा असंभावणीय एद । आ ! उदअण्हाण संकित्तणेण तत्तहोदिं चिंतअंतेणे सा सिविणे दिट्ठांभवे ।]

R to L राजा—यदि तावदयं स्वप्नः धन्यमप्रतिबोधनम् ।
अथवा विभ्रमो वा स्यात् विभ्रमो ह्यस्तु मे चिरम् ॥

विदूषकः—भो वयस्य ! एतस्मिन् नगरे अवन्तिसुन्दरी नाम यक्षिणी प्रतिवसति । सा त्वया दृष्टा भवेत् ।[भो वअस्स ! एदस्सिं णअरे अवन्तिमुदरीणाम जक्खिणी पडिवसदि । सा तुए दिट्ठा भवे ॥]

राजा—न न ।

स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।
चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥

अपि च वयस्य ! पश्य पश्य—

योऽयं संत्रस्तया देव्या तया बाहुर्निपीडितः ।
R to L स्वप्नेऽप्युत्पन्नसंस्पर्शः रोमहर्षं न मुञ्चति ॥

विदूषक—मेदानीं भवान् अनर्थं चिन्तयित्वा ।
एत्वेतु भवान् । चतुश्शालं प्रविशांवः ।

[मा दाणिं भवे अणत्थं चिंतिअ । एदु एदु भवं । चउस्साळं पविसामो ।]

(प्रविश्य)

काञ्चुकीयः – जयत्वार्यपुत्रः । अस्माकं महाराजो दर्शकः भवन्तमाह-—
एष खलु भवतोऽमात्यः रुमण्वान् महता बलसमुदयेन उपयातः खलु आरुणिमभिघातयितुम् । तथा हस्त्यश्वरथपदातीनि मामकानि विजयाङ्गानि संनद्धनि । तदुत्तिष्ठतु भवान् ।
अपि च

भिन्नास्ते रिपवो भवद्गुणरताः
पौराः समाश्वासिताः
पार्ष्णी याऽपि भवत्प्रयाणसमये
तस्या विधानं कृतम् ।
यद्यत् साध्यमरिप्रमाथजननं
तत्तन्मयाऽनुष्ठितम्
तीर्णा चापि बलैर्नदी त्रिपथगा
वत्साश्च हस्ते तव ॥ १२ ॥

राजा —(उत्थाय) बाढम् । अयमिदानीम्—
उपेत्य नागेन्द्रतुरङ्गतीर्णे
तमारुणिं दारुणकर्मदक्षम् ।
विकीर्णबाणोग्रतरङ्गभङ्गे
R to C महार्णवाभे युधि नाशयामि । I'll destroy him in the ocean of battle

(निष्क्रान्ताः सर्वे)

॥ इत्यवसितोऽङ्कः ॥

———

## ॥ टिप्पणी ॥

आगच्छ — आ+गम्धातोः लोट्. म. ए.

शीघ्रम् — सत्वरम्-तूर्णम् आशु । (अव्ययम्)

किं क्रियताम् — कर्मणि प्रयोगः । किं करवाणि — कर्तरि प्रयोगः ।

जानासि — ज्ञाधातोः लट्. म. ए.

| | | |
|---|---|---|
| जानाति | जानीतः | जानन्ति |
| जानासि | जानीथः | जानीथ |
| जानामि | जानीवः | जानीमः |

शीर्षवेदनया शीर्षे वेदना, तया ।

दुःखिता — दुःखं संजातमस्या अस्तीति दुःखिता ।

आवन्तिकां — वासवदत्ताम् । इदं वासवदत्तायाः प्रच्छन्ननाम । 'वासवदत्ता लावाणके दग्धा । उदयनस्यामात्यः यौगन्धरायणः तत्रोपरतोऽभूत् ।' इति उदन्तं प्रकटीकृत्य, स एव यौगन्धरायणः छद्मना विप्रवेषेण मगधराज्यमासाद्य वासवदत्तां आवन्तिका इति प्रच्छन्ननाम्ना पद्मावत्यां न्यासीकृतवान् इति, अस्यैव नाटकस्य प्रथमाङ्के दृश्यते ।

शब्दापय — आह्वय । लोट्. म. ए.

'ततः स्वयमेवागच्छति' एतद्वाक्यं सूचयति पद्मावती-वासवदत्तयोः परस्परस्निग्धताम् ।

विनोदयति — उपशमयति । वि+नुद्धातोः लट् प्र.ए. प्रेरणार्थकरूपम् । 'मधुराभिः कथाभिः विनोदयति' एतद्वाक्यं समीचीनं वर्तते ।

मनःक्लेशः एतादृशसाधनद्वारा सह्यवेदनः भवतीति । अत्याधुनिकैरपि एतत्समर्थ्यते ।

समुद्रगृहकं—जलसमीपस्थं विनोदगृहम् । 'समुद्रगृहमित्युक्तं जलयन्त्रनिकेतनम् ।' इति हारावली । केचित्तु एतत् समुद्र(गुप्त): गृहमिति विभज्य अर्थं विवृण्वन्ति ।

देवीवियोगविधुरहृदयस्य—वासवदत्तावियोगजनितक्लिन्नहृदयस्य । देव्यावियोगः देवीवियोगः, देवीवियोगेन विधुरं हृदयं यस्य ।

समीरितः—संधुक्षितः उद्दीपितः इति यावत् ।

वत्सराजस्य—वत्सानां राजा वत्सराजः-उदयनः तस्य । 'राजाहस्सखिभ्यःटच्' इति सूत्रेण राजन्शब्दः तत्पुरुषसमासे अकारान्तो भवति ।

पद्मावती – अधिकतरं वर्धते ।' अत्र केचिद्वदन्ति- इदं वाक्यं पद्मावत्यां उदयनस्य मदनबाधां प्रकटयतीति उदयनः पद्मावतीं ऊढवानपि वासवदत्तामेव संस्मरन् अतीव व्यथितः । पद्मावती-परिणयश्च समधिकतरं वासवदत्तामेव चिन्तयितुं चोदयति, न तूपशमयतीति विदूषकस्याभिप्रायः इति वक्तुं शक्यते किल ।

दुःखिता—दुःखं अस्याः जातमिति दुःखिता । 'पद्मावती शीर्षवेदनया दुःखिता ' इत्यत्र अभिप्रायभेदः अस्ति । 'पद्मावती शीर्षवेदनया क्लिन्ना ' इति यदुच्यते तत् निष्कारणमेव इति केचित् ब्रुवन्ति । पद्मावतीशीर्षवेदनायाः कारणमस्त्येव । उदयनः चतुर्थाङ्के विदूषकप्रश्नानुत्तरयन् ब्रवीति—" पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः वासवदत्ताबद्धहृदयं न तु तावन्मे मनो हरति ॥ (IV-४) इति । एतत् श्रुत्वा पद्मावती शिरोवेदनाव्याजेन त्वरितं गतवती प्रमदवनात् । न काचिदपि नारी अभिमानवती इदं सहेत ?

अपि तु यदि शिरोवेदना न मिथ्या भवेत् तर्हि सा समुद्रगृहं अवश्यं गच्छेत् । परं तु न तत्र सा गच्छतीति ॥

प्रवेशक—अदर्शनीयसंनिवेशं कवयः दृश्यकाव्ये विष्कम्भक चूलिका-अङ्कास्य-अङ्कावतार-प्रवेशकैः सूचयन्ति । प्रवेशकः नाट्यशास्त्र-रीत्या अङ्कद्वयमध्य एव दृश्यते । अत्र च नीचपात्राणि सन्ति । अत एव ते प्राकृतभाषायामेव व्यवहरन्ति । विष्कम्भकस्तु तद्भिन्न एव । स च शुद्धविष्कम्भकः सङ्कीर्णविष्कम्भकश्चेति द्विविधः । तत्र शुद्धविष्कम्भके मध्यमपात्राणि । सङ्कीर्णविष्कम्भके तु मध्यमनीचपात्राणि मिलित्वा संवदन्ते । अस्मिन्नङ्के तु प्रवेशकः आगामिदृश्यं समुद्रगृहे प्रचलिष्यति । पद्मावतीवासवदत्तयोः परस्पर-स्नेहः अतीव गाढः । पद्मावत्याः हृदयतोषः वासवदत्तां अवलम्बते यौगन्धरायणस्य पद्मावत्यां वासवदत्तान्यासीकरणयोजना फलदायिनी भविष्यतीत्यत्र न कोऽपि सन्देहः । एवं अर्थपूर्णोऽसौ अत्र प्रवेशकः ॥

(श्लोकः १.) कालक्रमेण पुनरागतदारभारः हिमहतां पद्मिनीमिव लावाणके हुतवहेन हृताङ्गयष्टिं तां अवन्तिनृपतेः श्लाघ्यां सदृशीं तनूजां चिन्तयामि ॥

पुनरागतदारभारः—गच्छता कालेन पुनः आगतः दाराणां भार्यायाः भारः यस्य तादृशः । अनेन पुनर्विवाहो नाम भार एव न तु सुखहेतुः इति उदयनः अभिप्रैति । पद्मावतीयं तस्याः भ्रात्रा दर्शकेन तस्मै दत्ता, उदयनस्तु नात्मेच्छया तां स्वीकृत-वान् । अत एव दारभार इत्याहेति भावः ।

हिमहतां पद्मिनीमिव—हिमपतनं पद्मिनीं व्यथयतीति कविसमयः ।एवं हि

कालिदासस्य रघुवंशे-

'हिमसेकविपत्तिरत्र मे

नलिनीपूर्वनिदर्शनं गता'। इति,

मेघदूते-' जातां मन्ये तुहिनमथितां पद्मिनीं वान्यरूपाम् ।

हुतवहेन—अग्निना। वहतीति वहः, हुतस्य वहः हृताङ्गयष्टि-दग्धदेहाम्। अङ्ग यष्टिरिव- अङ्गयष्टिः। हृता अङ्गयष्टिः यस्याः ताम् ।

श्लाघ्यां – श्लाघयितुं योग्याम् ।

लावाणके ग्रामे वासवदत्ता दग्धा, यौगन्धरायणश्च उपरतोऽभूदिति उदन्तं प्रकटीकृत्य राज्यविभ्रष्टमुदयनं मगधराजस्य साहाय्येन पुनः स्थापयितुं योजयामास यौगन्धरायणः उदयनामात्यः। मृगयातः पुनरागतः वत्सराजः तमुदन्तं श्रुत्वा अतीवोद्विग्नोऽभूत् । एतत्सर्वं अत्रैव प्रथमेऽङ्के चित्रितम्। पश्चात् उदयनः मगधराजपुत्रीं पद्मावतीं तस्याः भ्रातुः दर्शकस्य, स्वस्य मन्त्रिणश्च प्रयत्नेन वोढुं स्वीकृतवान् इति आधुनिकविमर्शकाः केचन वदन्ति ।

अस्मिन् श्लोके उपमालङ्कारः, वृत्तं तु वसन्ततिलका ॥

स्वरतां भवान्। 'शेषे प्रथमः' इति सूत्रेण प्रथमः पुरुषः विहितः 'भवद्योगे न मध्यमः' इति अत्र मध्यमः पुरुषः निषिध्यते ॥

(श्लोक २) रूपश्रिया समुदितां गुणतः युक्तां च प्रियां लब्ध्वा पूर्वाभिघात-सरुजोऽपि मम शोकः अद्य मन्द एव। अनुभूतदुःखः अहं पद्मावतीमपि तथैव समर्थयामि ।

रूपश्रिया —रूपस्य श्रीः रूपश्रीः, तया ।

समुदितां —युक्ताम् ।

लब्ध्वा — क्त्वाप्रत्ययान्तमव्ययम् ।

पूर्वाभिघातसरुजः — पूर्वश्चासौ अभिघातश्च पूर्वाभिघातः, रुजा सहि सरुक् । पूर्वाभिघातेन सरुक् तस्य ।

अनुभूतदुःखः अनुभूतं दुःखं येन सः ।

प्रविशतु भवान् — 'शेषे प्रथमः' इतिसूत्रेण प्रथमः पुरुषः । 'भवद्योगे मध्यमः' इति मध्यमपुरुषःनिषिध्यते

उदयनः विदूषकात् जानाति—पद्मावती शीर्षवेदनया अस्वस्थेति पूर्वमेव तस्याघात आसीत् -'वासवदत्ता लावाणकदावानलेन दग्धा' इति श्रुत्वा । अधुना तु पद्मावतीसमागमे वासवदत्ताविषयक शोकः अल्प एवापि 'पद्मावत्यपि कदाचित् तं परित्यजेत्' इति चिन्ता तं कम्पयतीति भावः ॥

दीपप्रभासूचितरूपः — दीपस्य प्रभा दीपप्रभा, तया सूचितं रूपं यस्य सः

काकोदरः — सर्पः । काकस्य उदरमिव उदरं यस्य सः । (काकं ईषत्कुटि लगतिमत् उदरं यस्य सः)

नाटककर्तुः _मनश्शास्त्रज्ञतां सूचयतीयमर्थपूर्णा घटना । यदा उदयन रङ्गप्रवेशकाले वासवदत्ताऽऽबद्धाकुलचिन्तोऽभूत्, तदा विदूषक 'पद्मावती अस्वस्था' इत्युक्त्वा तं प्रबोधयति । यावदुदयन पद्मावतीं चिन्तयन् व्यथितोऽभवत्, तावत्. वसन्तकः काकोद प्रस्तूय तत्क्षणं पद्मावतीचिन्तायाः उद्बोधयति । ए विदूषकः सर्वदा उदयनमेवानुसरन् तं प्रसादयितुं प्रयतते । एषा घटना उदयनस्य अभीरुत्वं च सूचयति ।

वैधेयस्य — मूर्खस्य ।

(श्लोकः ३) मूर्ख ! त्वं हि ऋज्वायतां क्षितौ भ्रष्टां मुखतोरणलोलमालां सर्पं अवगच्छसि । या निशि मन्दानिलेन परिवर्तमाना भुजगस्य विचेष्टितानि किञ्चित् करोति ॥

ऋज्वायता—ऋज्वी (सरला) च सा आयता (दीर्घा) च ऋज्वायता । ताम् ॥

मुखतोरणलोलमालां—बहिर्निर्गमनद्वारे स्थितां चलमालाम् । मुखे यत् तोरणं मुखतोरणं, मुखतोरणे लोला माला, ताम् ।

क्षितौ भ्रष्टां भूमौ च्युताम् - पतिताम् ।

अवगच्छसि—जानासि । अव+गम् ।

मन्दानिलेन—मन्दमारुतेन । मन्दश्चासौ अनिलश्च, तेन ।

परिवर्तमाना—चलन्ती ।

अस्मिन् अङ्के आदावन्ते च उदयनस्य धैर्यस्थैर्ये निरूप्य, सः तत्कथायां निरूपितादुदयनाद्भिन्नः इति दर्शयति भासमहाकविः । अत्र च नायक उदयनः धीरोदात्त एव । अस्मिन्पद्ये स्वभावोक्तिरलङ्कारः, वसन्ततिलकावृत्तं च ।

(श्लोकः ४) शय्या न अवनता, तथा आस्तृतसमा, न व्याकुलप्रच्छदा, अमलं शिरोपधानं हि शीर्षाभिघातौषधैः न क्लिष्टम् । रोगे दृष्टिविलोभनं जनयितुं काचित् शोभा न कृता । प्राणी रुजा शयनं प्राप्य पुनः स्वयं शीघ्रं न मुञ्चति ॥

शय्या शरीरभारेण नावनता । तथा आस्तृतसमा यथापूर्वं समं आस्तरणं यस्याः सा । आस्तृता चासौ समा च ।

न व्याकुलप्रच्छदा—अङ्गपरिवर्तनेन आच्छादनपटः यथा असंस्थितः भवेत् तथा न व्याकुलः प्रच्छदः यस्याः सा ।

शिरोपधानं—शिरस्य आश्रयः । अकारान्तः शिरश्शब्दोऽपि दृश्यते । 'शिरोवाची शिरोऽदन्तः रजोवाचीरजस्तथा' इति ह्युक्तम् ।

शीर्षाभिघातौषधैः—शिरोवेदनां परिहर्तुं उपयुक्तैः औषधैः । शीर्षस्य अभिघातः शीर्षाभिघातः तस्य औषधं, तैः । 'ओषधेरजातौ' इति स्वार्थे अण्प्रत्ययः ।

दृष्टिविलोभनं जनयितुं—दृष्टिमन्यत्राकर्षयितुम् ।

अत्र—यः कोऽपि नरः रुजया पीडितः सन् शयनं प्राप्य शीघ्रं न मुञ्चति । तत्रैव शयानः तिष्ठतीत्युक्त्वा भासमहाकविः मानवस्वभावज्ञतां प्रकटयति ।

अस्मिन् पद्ये स्वभावोक्तिरलङ्कारः, शार्दूलविक्रीडितं वृत्तं च ।

कथ्यतां काचित् कथा । कर्मणि प्रयोगः ।

कथयतु कांचित् कथाम् । कर्तरि प्रयोगः ।

बाढं—नूनम् । (अव्ययम्)

उदकस्नानानि—अवगाहनक्षमाः जलप्रदेशाः ।

(श्लोकः 5) प्रस्थानकाले स्वजनं स्मरन्त्याः प्रवृत्तं नयनान्तलग्नं बाष्पं स्नेहात् मम उरसि पातयन्त्याः अवन्त्याधिपतेस्सुतायाः स्मरामि ।

नयनान्तलग्नं—नयनयोः अन्तौ नयनान्तौ, तयोः लग्नम् ।

उरसि—हृदयभागे । नपुंसकलिङ्गस्य उरस्शब्दस्य सप्तम्येकवचनम् ।

सुतायाः स्मरामि—'अधीगर्थदयेशां कर्मणि । इति कर्मणि षष्ठी ।

अवन्त्याधिपतेः—प्रद्योतमहासेनस्य ।

(i) अधिपतिरेव आधिपतिः, अवन्त्याः आधिपतिः, तस्य ।

(ii) आ-समन्तात् अधिपतिः आधिपतिः

(iii) आवन्त्या (हेतुभूताया)+अधिपतेः अवन्त्याऽधिपतेः । तृतीया हेत्वर्थे । अत्र छन्दोविगतिं परिहर्तुमेव मध्ये आकारनिर्देशः इत्यपि केचित् ।

पातयन्त्याः—प्रेरणार्थकं रूपमिदम् । वर्तमानकृदन्तम् । स्त्रीलिङ्गः पातयन्तीशब्दः, षष्ठीविभक्त्येकवचनान्तः ।

प्रतिज्ञायौगन्धरायणे—उदयनमहासेनयोः अन्तःकलहः, कथं प्रद्योतमहासेनः उदयनं गजव्याजेन गृहीतवान् ? कथमुदयनः स्वमन्त्रिणां यौगन्धरायणरुमण्वद्वसन्तकानां उपायेन न केवलं बन्धनात्प्रमुक्तः, अपितु महासेनदुहितरं वासवदत्तां च गृहित्वा स्वनगरमाससाद ? इत्यादयो विषयाः सुचिरं वर्णिताः । कथं वासवदत्ता तस्मिन्ननुरक्ताऽपि उज्जयिनीं पितरौ च विहाय तेन सह कौशाम्बीं प्रति प्रयाणसमये बाष्पं उत्ससर्ज ? इत्युदयनः अस्मिन्पद्ये स्वयं स्मरति, विदूषकं च स्मारयति ॥

(श्लोक 4) उपदेशेषु मां ईक्षमाणया यया स्त्रस्तकोणेन
हस्तेन बहुश अपि आकाशवादितं कृतम् ।

बहुशः—अनेकधा ।

कोणः—वीणावादनसाधनम् ।

स्रस्तमपि—पतितमपि ।

आकाशवादितम् —आकाशे वादितम् । शून्ये अभिनयेनैव वादितम्।
अत्र श्लोके अनुष्टुप्छन्दः ॥

उदयनः अस्मिन् श्लोके प्रसङ्गमन्यं स्मरति । पुरा उज्जयिन्यां वीणावादनशिक्षणेषु अनेकवारं मदवलोकननिरता मद्गतचित्ततया वा वीणावादनसाधनं स्त्रस्तमपि न ज्ञातवती । तया कृतं च अभिनयमात्रेणैव वीणावादनं इति भावः ।

प्रावारकं—आच्छादनवस्त्रम् ।

ओष्ठगतं—कण्ठस्थम् ।

यदा विदूषकः उज्जयिनीविषयककथां विहाय अन्यां कथां प्रारभते तदा उदयनः सुप्तो बभूव । तमाच्छादयितुं प्रावारकमेकमानेतुं विदूषकः गच्छति । तस्मिन् क्षण एव वासवदत्ता समुद्रगृहं प्रविशति पद्मावतीं सेवितुम् ।

त्वरयामि—शीघ्रमानयामि ।

अन्यासनपरिग्रहेण—अन्यत् आसनं अन्यासनम् । अन्यासनस्य परिग्रहः, तेन ।

अविच्छिन्नसुखनिःश्वासा—अविरतं सुखेन निःश्वसन्ती । सुखः निःश्वासः सुखनिःश्वासः । अविच्छिन्नः सुखनिःश्वासः यस्याः सा ।

एकदेशसंविभागतया—सुप्ताकृतेः पार्श्वे रिक्तं अर्धभागं दृष्ट्वा इति भावः। एकदेशस्य संविभागः एकदेशसंविभागः । एकदेशसंविभागस्य भावः एकदेशसंविभागता, तया। हं आर्यपुत्रेति । वासवदत्ता शय्यायां जनान्तरशयनपर्याप्तभागं समीक्ष्य तद्रिक्ततया तच्छनीवे यावत् स्वपिति, तावदेव उदयनः उत्स्वप्नायते—'हा वासवदत्ते ।'

इति । एतत् श्रुत्वा सा वासवदत्ता प्रमादोऽभवत् इति ज्ञात्वा हं आर्यपुत्र इति उद्गिरति । अस्मिन् विषये एवं वक्तुं शक्यते-- पूर्वमेव वासवदत्तया सुप्ताकृतिः पुरुषस्य न तु स्त्रियः इति ज्ञातव्यमासीदिति चेन्न । भासः मन्दानिलेन फुरफुरायमाणं दीपं एकत्र विन्यस्य समुद्रगृहके पात्रप्रवेशं योजितवान् । अपि च उदयनः सुप्तः स्वपादशिरःपर्यन्तं स्वोत्तरीयेणाच्छाद्य शेते इति ।

वेरचिकां — काचित् अन्तःपुरपरिचारिका वत्सराजेन उदयनेन पूर्वसङ्गता इति केचनाहुः । विरचिकाशब्दः अलङ्कारपरः इत्यप्यभिप्रायोऽस्ति । भासेन आदृतं उदयनचारित्रविवेचनं दृष्ट्वा 'आभरणैरलङ्कृतां' इत्यप्यर्थः वक्तुं शक्यते ।

ाय्याप्रलम्बितं—शय्याप्रान्तादधो लम्बमानम् । वासवदत्ता तत्रैव तिष्ठति चेत्, तर्हि कोऽपि जनः तां विज्ञातुं प्रभविष्यतीति मत्वा, शय्याप्रान्तादधो लम्बमानं हस्तं शयनीये आरोप्य निष्क्रामति वासवदत्ता । तस्याः निर्गमनकाले उदयनाय हृदयतोषं समाधातुं भासः योजयति एतत्संनिवेशम् । पूर्वं वासवदत्ता अधुना उदयनश्च मुदमापतुः भासस्य योजनांचातुर्येण ॥

ासवदत्तायाः आत्मगतं कथनं तस्याः परिदेवनं प्रकटयति । सा वासवदत्ता पद्मावतीं प्रीणयति स्म । पद्मावती उद्विग्नहृदयस्य उदयनस्य विश्रमस्थानम् इति मत्वा परं सन्तोषमनुभवति सा वासवदत्ता । अपि तु पद्मावती अस्वस्था शीर्षवेदनया इति ज्ञात्वा अतीव खिन्ना अभूत् सा । समुद्रगृहे पद्मावती एकाकिनी केवलं दीपसहाया वर्तते इति दूरतः वीक्ष्य परिजनप्रमादं दूषयति । अन्यासनपरिग्रहेण पद्मावती दुःखिता भवतीति मत्वा तच्छयनीये तिष्ठति,

पश्चात् स्वपिति तत्रैव । तावदेव उदयनः उत्स्वप्नायते । अ
र्वचनीयव्याकुलचिन्तायै वासवदत्तायै ईषदुल्लासप्रदाने भासः
समर्थोऽभूत् इति वक्तुं शक्यते । अत एव वासवदत्तां व्याजेनैव
समुद्रगृहमानाय्य शयनसंविधानं योजयति । 'अकरुणाः खल्वीश्वमम
मे' इत्येतद्वाक्येन वासवदत्तायाः परिदेवनपरिचयः भवति ॥

(श्लोक : 7) सम्भ्रमेण निष्क्रामन् अहं द्वारपक्षेण ताडितः ।

ततः अयं भूतार्थः मनोरथो (वा इति) वक्तुं न जानामि

भूतार्थः—सत्यविषयः । भूतश्चासौ अर्थश्च भूतार्थः ।

ससंभ्रमं वासवदत्ता स्यान्न वा ? इति परिक्षणार्थं जाग्रत्सुप्त्यवस्थनेत्र
गतवान्, तामेवानुसरन् । द्वारपक्षेण ताडितस्सन् प्र
हतः । तस्मादयं मनोरथः 'गता स्त्री वासवदत्तैव' इत्येवंदीर्घ
भूतार्थः सत्यो न वा ? न जानामि इति भावः ॥

उपरता—मृता ॥

अस्मिन् श्लोके अनुष्टुप्छन्दः वर्तते ।

(श्लोकः 8) सखे ! शय्यायां अवसुप्तं मां बोधयित्वा गता सा दग्धा
ब्रुवता रुमण्वता पूर्वं वञ्चितोऽस्मि ।

दग्धा—दह् धातोः भूतकृदन्तरूपम् स्त्रीलिङ्गप्रथमाविभक्त्येकवचनम् ।

रुमण्वता—उदयनस्य अपरेण मन्त्रिणा । अत्रापि अनुष्टुप् छन्दः ।

'उदकस्नानसंकीर्तनेन—दृष्टा भवेत्' इति विदूषकवाक्यं स्वप्नका
सूचयति । निजजीवनेऽपि तादृशोऽनुभवः वर्तते किल ।

(श्लोकः 9) यदि तावत् अयं स्वप्नः अप्रतिबोधनं, धन्यम् । अथवा अयं विभ्रमो वा स्यात् । विभ्रमो हि मे सुचिरमस्तु ॥

मम अनुभवः यदिस्वप्नः तर्हि अजागरः अभीष्टतमः । इयं मनसः भ्रान्तिः विभ्रम एवास्तु चिरकालम् । यस्मात् तथा सति वासवदत्तासमागमो भवति किलेति भावः ।
अस्मिन्श्लोकेऽपि अनुष्टुप्छन्दः वर्तते ।

(श्लोकः 10) स्वप्नस्यान्ते विबुद्धेन चरितं अपि रक्षन्त्याः नेत्रविप्रोषिताञ्जनं दीर्घालकं मुखं दृष्टम् ॥

नेत्रविप्रोषिताञ्जनं — परित्यक्तनेत्राञ्जनम् । विप्रोषितं अञ्जनं विप्रोषिताञ्जनं नेत्राभ्यां विप्रोषिताञ्जनं यस्य तत् ।

दीर्घालकं—दीर्घाः अलकाः यस्य तत् । मुखे अन्वेति । अबद्धवेणिकः प्रोषितभर्तृकत्वात् । प्रोषितभर्तृका नाम स्त्री, यस्याः पतिः प्रवासार्थं गतः

पतिवियोगदुःखितां वासवदत्तां निरालकाकारां दृष्टवानहं इत्युदयनः तदवलोकनसमर्थनार्थं यतते पुनः । अत्रापि अनुष्टुप् छन्दः ॥

(श्लोकः 11) संत्रस्तया देव्या निपीडितः अपि उत्पन्नसंस्पर्शः सः अयं बाहुः रोमहर्षं न मुञ्चति ।

संत्रस्तया—संभ्रान्तया । भीतया वा ।

रोमहर्षं—हर्षसूचकं रोमाञ्चनम् ।

पूर्वोक्तरीत्या भासकविः उदयनमप्येवं सान्त्वयति ।

वासवदत्तास्पर्शनेन—वासवदत्तया उदयनगात्रस्पर्शनेन । अत्रापि अनुष्टुप्छन्दः ॥

आर्यपुत्रः—एषः शब्द पतिसम्बोधकः । स्वराजदारिकायाः भर्तेति कृत्व
अयं काञ्चुकीयस्य उपचारः ।

आरुणिः—उदयनराज्यापहारी । असौ पारसीकदेशा धिपतेः राज्ञः सेन
पतिरासीत् इति केचित् ।

दर्शकः—पद्मावत्याः अग्रजः । मगधदेशस्य राजा ।

अभिघातयितुम्—तुमुन्नन्ताव्ययम् । अभि+हन् प्रेरणार्थे ।

मामकानि—मदीयानि ।

संनद्धानि—भूतकृदन्तरूपम् । सं+नह् । नपुंसकलिङ्ग प्रथमाबहुवचनम्

(श्लोकः 12) ते रिपवः भिन्नाः । भवद्गुणरताः पौराः समाश्वासित

भवत्प्रयाणसमये या पार्ष्णी तस्या अपि विधानं कृतम् । यद्यत् अरिप्रम
थजननं स्यात् तत् मया अनुष्ठितम् । त्रिपथगा नदी अपि
बलैः तीर्णा । वत्साश्च तव हस्ते ।

रिपवः— शत्रवः ।

भिन्नाः—भिद्धातोः भूतकर्मणिकृदन्तरूपम् ।

पार्ष्णी—सैन्यपृष्ठम् । इदं पदं पुल्लिङ्ग स्त्रीलिंङ्ग वा भवेत् । ईकारान
प्राचिनतां सूचयति ।

विधानं—पालनक्रमः ।

त्रिपथगा—गङ्गा । स्वर्गलोके मन्दाकिनी इति, भागीरथी इति भूमौ
भोगवती इति पाताले च गङ्गा प्रवहतीति पुराणेषूक्तम् ॥ त्र
पन्थानः त्रिपथाः । त्रिपथैः गच्छतीति त्रिपथगा ॥ यद्व
त्रयाणां पथां समाहारः त्रिपथम् । त्रिपथेन गच्छतीति त्रिपथगा

तीर्णा—तृञ् धातोः भूतकर्मणि कृदन्तरूपम् ।

वत्साः—देशवाचकत्वात् बहुवचनम् । 'तस्य निवासः' इति सूत्रेण ।
'अत्र शार्दूलविक्रीडितं वृत्तम् ॥

अयं श्लोकः उदयनसचिवयोः यौगन्धरायणरुमण्वतोः अन्यादृशकार्ययोजना सामर्थ्यं विवृणुते । स्वाम्युत्कर्ष एव निजोत्कर्षः इति विज्ञाय तौ कार्यतत्परौ वर्तेते स्म । अयमेवाभिप्रायः भासस्य सचिवायत्तता- याम् ।

(श्लोकः 13) नागेन्द्रतुरङ्गतीर्णे विकीर्णबाणोग्रतरङ्गभङ्गे महार्णवाभे युधि

दारुणकर्मदक्षं तं आरुणिं उपेत्य अहं नाशयामि ॥

नागेन्द्रतुरङ्गतीर्णे—नागेन्द्राश्च तुरङ्गाश्च नागेन्द्रतुरङ्गाः । नागेन्द्रतुरङ्गैः तीर्णाः यस्मिन् तस्मिन् । तीर्णशब्दः आदावेव योजनीयः । आहिताग्न्यादित्वात् । तीर्णे व्याप्ते । तुरङ्गाः-तुरं शीघ्रं गच्छन्तीति ते ।

विकीर्णबाणोग्रतरङ्गभङ्गे—विकीर्णाश्च ते बाणाश्च विकीर्णबाणाः, ते उग्रतरङ्गा भङ्गाः इव यस्मिन् तस्मिन् ।

महार्णवाभे—महार्णवस्य आभेव शोभेव आभा यस्य तत् महार्णवाभम् । तस्मिन् ॥ अत्र श्लोके उपमालङ्कारः द्योतते । उपेन्द्रवज्रा- छन्दः ॥

युधि – सङ्ग्रामे ।
उदयनस्येयं घोषणा उद्बोधनसाफल्यं कथयति ॥

---

## अभ्यासः

I एकवाक्येन उत्तरं लिखत—

१ भासमहाकविः कः ?
२ रामायणकथाधारिते भासस्य रूपके के ?
३ भासस्य रूपकेष्वेकस्य नाम लिखत ।
४ बृहत्कथाधारिते भासस्य रूपके के ?
५ भासस्य बालचरितं किमाधारितम् ?
६ चारुदत्तनाटकाधारितः ग्रन्थः कः ?
७ उदयनः कः ?
८ पद्मावती कस्य स्वसा ?
९ वासवदत्ता का ?
१० विदूषकस्य नाम किम् ?

II ससन्दर्भं विवृणुत—

१ तां पद्मिनीं हिमहतामिव चिन्तयामि ।
२ पद्मावतीमपि तथैव समर्थयामि ।
३ हस्तेन स्त्रस्तकोणेन कृतमाकाशवादितम् ।
४ अकरुणाः खल्वीश्वराः ।
५ प्रतिज्ञाभारः मम दर्शनेन निष्फलः संवृत्तः ।
६ नहि नहि दुःखिताऽस्मि ।
७ दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ।
८ यदि तावदयं स्वप्नः धन्यमप्रतिबोधनम् ।

९ स्वप्नेऽप्युत्पन्नसंस्पर्शः रोमहर्षं न मुञ्चति ।

१० महार्णवाभे युधि नाशयामि ।

III आलोच्य लिखत—

१ भासरूपकाणां तदाकराणां च नामानि लिखत ।

२ भासस्य कालविषये द्वित्राणि मतानि उपपादयत ।

३ भासरूपकाणां साम्यांशाः के ?

४ स्वप्नदृश्यं विविच्य लघुप्रबन्धमेकं लिखत ।

५ लघुटिप्पणीं लिखत—

प्रवेशकः, उदयनः, वासवदत्ता, काञ्चकीयः, विदूषकः ।

IV एतेषां अनुवादं आंग्लभाषायां कर्णाटकभाषायां वा विलिख्य, भावं विवृणुत । श्लोकसंख्या—१, २, ३, ४, ५, १२

V अथ व्याकरणच्छन्दोऽलङ्कारेषु

(क) सन्धिं विभज्य नामानि लिखत—

दुःखितेति, स्वयमेवागमिष्यति, कुत्रेदानीं, तथैव, एत्वेत्वार्या, प्रविशत्वार्या, पद्मावत्यवसुप्ता, यावच्छयिष्ये, भूतार्थोऽयम् ह्यस्तु, बहुशोऽप्युपदेशेषु, वञ्चितोऽस्मि, खल्वीश्वराः, स्वप्नेऽप्युत्पन्नः ॥

(ख) विग्रहवाक्यानि लिखत—

शीर्षवेदनया, अनुभूतदुःखः, ऋज्वायतां, भुजगस्य मन्दानिलेन, निवृत्तसेगया, दीर्घालकम्, महार्णवाभे,

(ग) व्याकरणरीत्या पदपरिचयं कुरुत—

त्वं, अहं, मधुरा, शय्या, तेन, पद्मावत्याः, भवते, सुष्ठु, तां, मम, अद्य, परिवर्तमानः, भवितव्यं, जनयितुं, प्राप्य, उपविश्य, लब्ध्वा, बाढं, अन्यां, उरसि, पातायन्त्याः, बहुशः, दिष्ट्या, भवती, निष्क्रामन् संभ्रमेण, ताडितः, चिरात्, बोधयित्वा, वञ्चिताः रुमण्वता, चिन्तयित्वा, प्रविश्य, चिरं, वक्तुम् ।

(घ) प्रयोगं परिवर्तयत—

१ किं क्रियताम्

२ त्वरतां तावद्भवान् ।

३ निद्रा मां बाधते ।

४ कथ्यतां काचित् कथा ।

५ अहं अन्यां कथां कथयिष्यामि ।

(च) लिङ्गवचनविभक्तीः लिखत—

महता, वासवदत्तायाः, रिपवः, तव, युधि, भवान्, भवतीं, देव्या, मे, तेन ॥

(छ) धातुलकारपुरुषवचनानि लिखत—

विनोदयति, अन्विष्यामि, वर्तते, भवतु, जानासि, गच्छ, निवेदय, वर्धते, आदेशय, अवगच्छसि, करोतु, प्रतिपालयतु, भवेत्, देहि ॥

(ज) यथानिर्देशं पुनर्लिखत—

१ सङ्कटे निक्षिप्तः आर्यपुत्रः । (कर्तरिकृदन्तरूपम्)

२ तेन हि पश्यामस्तावत् । (लटः स्थाने लोड्रूपम्)

३ उदयनः गुणान् अस्मरत् । (क्रियापदस्थाने कर्तरिक्तदन्त-रूपम् )

४ किमर्थं नालङ्कृताऽसि । (कर्मणिकृदन्तरूपस्य स्थाने कर्तरिक्तदन्तरूपम् )

(भ) दोषान् परिहरत—

१ वत्सराजा पद्मावतिं परिणयत् ।

२ गच्छ भवती ।

३ प्रविशतु त्वम् ।

(ट) अत्रत्यं अलङ्कारं सलक्षणं निर्दिशत—

१ तां पद्मिनीं हिमहतामिव चिन्तयामि ।

(ठ) सप्रस्तारं वृत्तं निर्दिशत—

१ बहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥

२ रूपश्रिया संमुदितां गुणतश्च युक्तां
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।
पूर्वाभिघात सरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि

———

## कक्षाभ्यासः

१ भासविषयकसमस्यायाः विविधान् अभिप्रायान् सङ्कलयत ।

२ भासप्रणीतानि इतरनाटकानि पठित्वा तेषां वैशिष्ट्यं विवृणुत ।

३ 'प्रतिज्ञायौगन्धरायणं' नाम नाटकं पठित्वा, उदयनवासवद विवाहः कथं च कुत्र संबभूव ? इति लिखत ॥

---



OBTAINING THE SIGNET RING.

## अङ्गुलिमुद्राधिगमः

(मुद्राराक्षसप्रथमाङ्कः)

### पीठिका

'काव्येषु नाटकं रम्यम्' इत्युक्तिः प्रसिद्धैव। बहुनाटकेषु नायिका-नायकयोः प्रणयः, तयोः विप्रलम्भः, अन्ते च समागमः इति मुख्यं कथा-वस्तु, परंतु- मुद्राराक्षसनाटकेऽस्मिन् स्त्रीपात्राणि विरलानि। अत्र नायिकायाः आवश्यकतैव नास्ति। राजतन्त्रप्रतितन्त्रभूयिष्ठमिदं नाटकं प्रतिक्षणं सामाजिकानां कुतूहलं जनयति। वीररसप्रधानेऽस्मिन् नाटके सप्ताङ्काः सन्ति। अत्र शृङ्गाररसस्य नामापि न श्रूयते। प्रधानपात्रे कौटिल्यराक्षसौ।

### कविकाव्यविचारः

प्रस्तुतपाठ्यभागः विशाखदत्तकविविरचित 'मुद्राराक्षस' नाम्नः नाटकस्य प्रथमाङ्कात् संगृहीतः। कविः नाटकस्य प्रारम्भे प्रस्तावनायां सूत्रधारद्वारा आत्मानं परिचाययति। यथा—"अद्य सामन्तवटेश्वरदत्त-पौत्रस्य महाराजपदभाक्पृथुसूनोः कवेः विशाखदत्तस्य कृतिः मुद्राराक्षसं नाम नाटकं नाटयितव्यम्" इति। अनेन वाक्येन इदं निश्चितं भवति, यत्—विशाखदत्तः पृथुनाम्नः महाराजस्य पुत्रः, तस्य पितामहः वटेश्वरः, कस्यचिद्राज्ञः सामन्तः आसीत् इति। परंतु कुत्रत्योऽसौ ? कस्मिन् काले च सञ्जातः ? इत्यवधारायितुं न सुलभम्। नाटकस्य भरतवाक्येन यत्किञ्चित् ज्ञातुं शक्यते। यथा—

म्लेच्छैरुद्विज्यमाना भुजयुगमधुना संश्रिता राजमूर्तेः<br>
सश्रीमद्बन्धुभृत्यः चिरमवतुमहीं पार्थिवः चन्द्रगुप्तः।" इति।

केषुचित् पुस्तकेषु चन्द्रगुप्तपदस्थाने अवन्तिवर्मेतिपदं पाठान्तरतया दृश्यते। इतिहासे काश्मीरस्य राजा कश्चित्, मौखरीवंशस्य कान्यकुब्जस्य राजा कश्चित् इति द्वौ अवन्तिवर्मेति नामधेयं धारयतः॥ मुद्राराक्षसस्य रीतिः गौडी। अतःभरतवाक्ये उद्दिष्टः अवन्तिवर्मा कान्यकुब्जस्य राजा मौखरीवंशस्थः इति केचन वदन्ति।

क्रिस्तीयषष्ठशतके हूणाः इति वैदेशिकाः म्लेच्छाः तत्र तत्र राज्याक्रमणं कृत्वा राज्ञः पीडयन्ति स्म। स्थाण्वीश्वरस्य राजा प्रभाकरवर्धनः, कान्यकुब्जस्य राजा अवन्तिवर्मा च युद्धे तान् पराजित्य निष्कासितवन्तौ। अतः विशाखदत्तः मुद्राराक्षसनाटके अवन्तिवर्माणं, तथा बाणभट्टः हर्षचरिते प्रभाकरवर्धनं च प्रशंसतः। अवन्तिवर्मणः पुत्रः ग्रहवर्मा प्रभाकरवर्धनस्य पुत्रीं राज्यश्रियं ऊढवान्। तस्य च कालः क्रिस्तीयषष्ठशतकम्। अतः विशाखदत्तः क्रि.श. षष्ठे शतके आसीदित्यनुमीयते।

अनेकहस्तप्रतिषु नाटकस्य भरतवाक्ये चन्द्रगुप्तः' इत्येव लिखितमस्ति। एषः विशाखदत्तस्याश्रयदाता इतिपक्षे, एषः मौर्यवंशीयः चन्द्रगुप्तः न भवेत्। यतः नाटके तस्य गौणं स्थानं दत्तमस्ति। भरतवाक्ये - म्लेच्छैरुद्विज्यमाना भूतधात्री अधुना राज्ञः चन्द्रगुप्तस्य भुजयुगलं संश्रिता इति, चन्द्रगुप्तस्य श्लाघनीयं स्थानं दत्तमस्ति। गुप्तवंशीयः मगधाधिपः द्वितीयः चन्द्रगुप्तः (क्रि. श. ३७५ तः ४१३ पर्यन्तं) परपीडां परिहृत्य प्रायः समग्रं भारतं शास्ति स्मेति इतिहासाद् ज्ञायते। तथैव नाटके गौडदेशस्त्रियः उल्लिखिताः। अतः अस्माकं कविः मगधदेशाधिपस्य द्वितीयचन्द्रगुप्तस्य कश्चित् सामन्तः आसीदिति वक्तुं शक्यते। अतः अस्य कालः क्रि. श. पञ्चमशतकमित्यनुमीयते।

किञ्च दशरूपके (१-६८, २-५५) मुद्राराक्षसनाटकस्योल्लेखात् तत्पूर्वविरचितमेवैतन्नाटकमिति वक्तुं शक्यते। दशरूपकस्य समयः क्रिस्तशकदशमशतके विभाव्यते। अतः विशाखदत्तस्य समयविचारे द्वे सीमे अभिज्ञातुं शक्येते—क्रिस्तीयपञ्चमशतकं दशमशतकं चेति ॥

मुद्राराक्षसनाटकमेव विशाखदत्तस्य कृतिषु लब्धा एका समग्रा कृतिः। देवीचन्द्रगुप्तम्, अभिसारिकावञ्चितकम्, राघवानन्दम् इत्येतानि नाटकान्यपि विशाखदत्त एव विरचितवान् इति भोजप्रणीतात् शृङ्गार-प्रकाशात् ज्ञायते।

विशाखदत्तस्य शैली नितरामोजस्विनी। संवादोऽपि अकृतकः।

चन्द्रगुप्तवृत्तान्तः भागवतपुराणे (X) विष्णुपुराणे च संक्षेपतः दृश्यते। दशरूपकस्य व्याख्याता धनिकः बृहत्कथैव मुद्राराक्षसनाटकस्य आकरग्रन्थः इति अभिप्रैति।

**अथास्य पाठ्यभागस्य सारांश :—**

अमात्यराक्षसनामाङ्किताङ्गुलीयकस्य लाभ एव 'अङ्गुलीयमुद्राधि-गमः' इति अत्र मुख्यं कथावस्तु। राक्षसः पूर्वेषु राजसु नन्दादिषु बद्धानुरागः। तेषां मरणानन्तरमपि सः चन्द्रगुप्ते द्वेषं साधयति। पर्वतराजपुत्रेण मलयकेतुना सह मैत्रीं कृत्वा चन्द्रगुप्तं अभिभवितुमिच्छति। राजनीतिकुशलं तं कथमपि गृहीत्वा चन्द्रगुप्तस्य साचिव्यं यथा स्वीकरोति तथा कर्तुं चाणक्यः प्रसङ्गान् सृजति।

एकदा चाणक्येन प्रेषितः प्रणिधिः निपुणकः चन्दनदासस्य गृहपरिसरे दैवात् अमात्यराक्षसनामाङ्किताङ्गुलीयकमेकं लभते। सः चरः तदङ्गुलीयकं चाणक्यायार्पयति। कायस्थः शकटदासः राक्षसस्य परम-सुहृत्। चाणक्यः तस्य हस्तेन अदत्तबाह्यनाम पत्रमेकं लेखयित्वा,

राक्षसनामाङ्कितया अङ्गुलिमुद्रया तत्पत्रं मुद्रयति । अनेन पत्रेण मल
मैत्रीं भेत्तुं अयमुपायः कृतः । चन्दनदासः राक्षसस्य द्वितीयं हृदयमि
स्थितः सुहृत् । सः राक्षसगृहजनं स्वगृहे निक्षिप्य रक्षितवानित्या
कृत्वा, सः राजापथ्यकारीत्युद्घोष्य चन्द्रगुप्तद्वारा तस्य प्राण
दण्डमाज्ञापयति । राक्षसस्य कृते यथा चन्दनदासः स्वप्राणान् त्यक्
सिद्धः तथा राक्षसोऽपि मित्रस्यापदि तं रक्षितुं कुसुमपुरं धावति इ
चाणक्यस्य विश्वासः । अत एवान्ते—" आरण्यकं गजमिव (राक्ष
प्रगुणीकरोमि " इत्यनेनोच्यते ।

अत्र च अङ्गुलिमुद्राया एव प्रामुख्यात् " अङ्गुलिमुद्राधिगमः "
इति अस्य भागस्य शीर्षिका दत्ता ॥

———

## पात्रपरिचयः

सूत्रधारः—रूपकव्यवस्थापकः ।

नटी—तत्पत्नी ।

चाणक्यः—विष्णुगुप्तः इति, कौटिल्य इति च अस्यैव नामान्तरे । राजकार्यचतुरो ब्राह्मणः एक एव नवनन्दान् उन्मूल्य अमात्यराक्षसं चन्द्रगुप्तस्य प्रधानमन्त्रिणं कर्तुं प्रयतते ।

शार्ङ्गरवः – चाणक्यशिष्यः

निपुणकः—चाणक्यस्य प्रणिधिः ।

चन्दनदासः—पुष्पपुरनिवासी मणिकारश्रेष्ठी, राक्षसस्य परमसुहृत् ।

(निर्दिष्टपात्राणि)

अमात्यराक्षसः—नवनन्दानां प्रधानमन्त्री, यं चाणक्यः चन्द्रगुप्तस्य प्रधानमन्त्रिणं कर्तुं प्रयतते ।

क्षपणकः—जीवसिद्धिनामा बौद्धभिक्षुः चाणक्यस्य प्रणिधिः । अस्य निजनाम 'इन्दुशर्मा' इति ।

शकटदासः कायस्थः अमात्यराक्षसस्य परममित्रम् ।

मलयकेतुः—पर्वतराजस्य पुत्रः, यस्य साहाय्येन चन्द्रगुप्तं समुच्छेत्तुमिच्छति ।

कालपाशिकः—दण्डपाशिकः

चन्द्रगुप्तः—मगधाधिपः । अयं-चन्द्रः, चन्द्रमाः, मौर्यः वृषलः इति शब्दैरप्यभिधीयते ।

भागुरायणः—चाणक्यस्य प्रणिधिः

# अङ्गुलिमुद्राधिगमः

धन्या केयं स्थिता ते शिरसि ?
शशिकला, किं नु नामैतदस्याः ?
नामैवास्याः तदेतत् परिचित —
मपि ते विस्मृतं कस्य हेतोः ? ।
नारीं पृच्छामि नेन्दुं कथयतु
विजया न प्रमाणं यदीन्दुः
देव्या निह्नोतुमिच्छोरिति
सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ १ ॥

(नान्द्यन्ते–)

सूत्रधारः—अलमतिप्रसङ्गेन । आज्ञापितोऽस्मि परिषदा यथा–अद्य कवे विशाखदत्तस्य कृतिः मुद्राराक्षसं नाम नाटकं नाटयितव्यम्- इति यत् सत्यं काव्य–विशेषवेदिन्यां परिषदि प्रयुञ्जानस्य ममापि चेतसि सुमहान् परितोषः प्रादुर्भवति । कुतः—

" चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः ।
न शालेः स्तम्बकरिता कर्तुर्गुणमपेक्षते ॥ २ ॥

तद्यावदिदानीं गृहं गत्वा गृहिणीमाहूय गृहजनेन सह सङ्गीतकमनुतिष्ठामि

(परिक्रम्यावलोक्य च)

इमे नो गृहाः । तद्यावत् प्रविशामि ।

(नाट्येन प्रविश्यावलोक्य च)

अये ! किमिदं अस्मादृगृहेषु महोत्सव इव दृश्यते !
भवतु कुटुम्बिनीमाहूय पृच्छामि ।

(हे) गुणवत्युपायनिलये !
(हे) स्थितिहेतो ! (हे) साधिके त्रिवर्गस्य ।
(हे) मद्भवननीतिविद्ये !
कार्यादार्ये ! तद्रुतमुपेहि ॥ ३ ॥ तद्रुतमुपेहि

नटी— (प्रविश्य) आर्यपुत्र ! इयमस्मि । आज्ञानियोगेन मामनुगृह्णात्वार्यः

[अज्जउत्त ! इअह्मि अण्णाणिओएण मं अणुगेह्णदु अज्जो]

सूत्रधारः—आर्ये ! पश्य ।

क्रूरग्रहः सकेतुः
चन्द्रमसम्पूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलात्—
(इत्यर्धोक्ते—) (नेपथ्ये)

आः । क एष मयि स्थिते चन्द्रमभिभवितुमिच्छति बलात् ?

सूत्रधारः............रक्षत्येनं तु बुधयोगः ॥ ४ ॥ RDC.

नटी—आर्य ! कः चन्द्रं ग्रहाभियोगाद्रक्षितुमिच्छति ?

[अज्ज ! को चन्दं गहाभिजोओदो रक्खिदुं इच्छदि ?]

सूत्रधारः—आं ! ज्ञातम् । कौटिल्यः ।

कौटिल्यः कुटिलमतिः स एष येन
क्रोधाग्नौ प्रसभमदाहि नन्दवंशः ।
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नः
मौर्येन्दोः द्विषदभियोग इत्यवैति ॥ ५ ॥

आवां गच्छावः । (निष्क्रान्तौ) exit

इति प्रस्तावना prelude

---

(ततः प्रविशति मुक्तां शिखां परामृशन् चाणक्यः)

चाणक्यः—कथय, क एषः मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात् ।

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य ।
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥ ६ ॥

अपि च—

नन्दकुलकालभुजगीं → शिखा
कोपानलबहललोलधूमलताम् ।
अद्यापि बध्यमानां
वध्यःको नेच्छति शिखां मे ॥ ७ ॥

शार्ङ्गरव ! शार्ङ्गरव !

शिष्यः—(प्रविश्य) उपाध्याय ! आज्ञापयतु ।

चाणक्यः—वत्स ! उपवेष्टुमिच्छामि ।

शिष्य—उपाध्यांय ननु इयं संनिहितवेत्रासनैव द्वारप्रकोष्ठशाला । तदस्यां उपवेष्टुमर्हत्युपाध्यायः ।

चाणक्यः—वत्स ! कार्याभिनियोग एव अस्मान् व्याकुलयति । न पुनः उपाध्यायसहभूः शिष्यजने दुःशीलता ।

(नाट्येनोपविश्य, आत्मगतम् )

कथं प्रकाशतां गतोऽयमर्थः पौरेषु ! यथा किल-राक्षसः पर्वतक-पुत्रेण मलयकेतुना सह सन्धाय वृषलमभियोक्तुमुद्यतः इति । (विचिन्त्य) अथवा येन मया सर्वलोकप्रकाशं नन्दवंशवधं प्रतिज्ञाय

निस्तीर्णा दुस्तरा प्रतिज्ञासरित्, सोऽहमिदानीं प्रकाशीभवन्तमप्येनमर्थं समर्थः प्रशमयितुम्। इदानीं अवसितप्रतिज्ञाभरोऽपि वृषलापेक्षया शस्त्रं धारयामि। येन मया—

समुत्खाता नन्दाः नव हृदयशल्या इव भुवः
कृता मौर्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योः द्विषति च विभक्तं सुहृदि च ॥८॥

अथवा—अगृहीते राक्षसे किमुत्पादितं चन्द्रगुप्तलक्ष्म्याः? (विचिन्त्य) अहो! राक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणः! साधु, अमात्यराक्षस! मन्त्रिबृहस्पते! साधु। कुतः?

ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतःसेवते
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया।
भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्यधुरां वहन्ति कृतिनः ते दुर्लभास्त्वादृशाः
॥९॥

अत एवास्माकं त्वत्सङ्ग्रहे प्रयत्नः कथमसौ वृषलस्य साचिव्यग्रहः स्यादिति। तन्मयाऽपि अस्मिन् वस्तुनि न शयानेन स्थीयते, यथाशक्ति क्रियते तद्ग्रहणं प्रति यत्नः।

(ततः प्रविशति सह यमपटेन चरः)

चरः प्रणमत यमस्य चरणौ
किं कार्यं देवैरन्यैः।
एष खल्वन्यभक्तानां
हरति जीवं परिस्फुरन्तम् ॥१०॥

[पणमह जमस्स चलणे
किं कज्जं देवएहि अण्णेहिं ।
एसो क्खु अण्णभत्ताणं
हरइ जीअं फडफडन्तं ॥ १० ॥]

इदं गृहं प्रविश्य यमपटं दर्शयन् गायामि-

[एदं गेहं प्रविसिअ जमवडं दसअंतो गाएमि]

(इति परिक्रामति)

शिष्यः—(विलोक्य) भद्र ! न प्रवेष्टव्यम् ।

चरः—अहो ! ब्राह्मण ! कस्येदं गृहम् ? Whole house like

[हंहो ! बंह्मण ! कस्स एदं गेहं ?]

शिष्यः— अस्माकमुपाध्यायस्य सुगृहीतनाम्नः आर्यचाणक्यस्य । Good-named

चरः -- (विहस्य) अहो ! ब्राह्मण ! आत्मीयस्यैव मम धर्मभ्रातुः गृ भवति । तस्मात् देहि मे प्रवेशं यावत्तवोपाध्यायस्य यम प्रसार्य धर्ममुपदिशामि । [हंहो ! बंह्मण ! अत्तकेरकस्स ज्जे धम्मबादुअस्स घरं होदि । ता देहि मे पवेसं, जाव दे उ ज्झाअस्स जमपडं पसारिअ धम्मं उवदिसामि ।] Laughs allow my

शिष्यः—(सक्रोधं) धिङ्मूर्ख ! किं भवान् अस्मदुपाध्यायादपि धर्मवित्तरः Are you

चरः—अहो ! ब्राह्मण ! मा कुप्य । नहि सर्वं सर्वं जानाति तत् किमपि ते उपाध्यायो जानाति, किमपि अस्मादृशाः जानन्ति यदि तवोपाध्यायः सर्वं जानाति. तर्हि जानातु तावत् कस्य चन्द्रो नभिप्रेतः इति । [हंहो बंह्मण ! माकुप्प, ण हि स सव्वं जाणादि । ता किंपि ते उबज्झावो जाणादि, किं अह्मारिसा जाणन्दि । जइ दे उबज्झावो सव्वं जाणा जाणादु दाव कस्स चंदो अणभि मदो त्ति ।] Not everyone knowing everything

चाणक्यः—(आकर्ण्य, आत्मगतं) अये ! 'चन्द्रगुप्तादपरक्तान् पुरुषान् जानामि' इति उपक्षिप्तमनेन (प्रकाशं) भद्र ! सुखं प्रविश ।

चरः—जयतु जयत्वार्यः [जेदु जेदु अज्जो]

चाणक्यः—(विलोक्य, आत्मगतं) अये । कथमयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः (प्रकाशं) भद्र स्वागतम्, उपविश्यताम् ।

चरः—यदार्य आज्ञापयति । [जं अज्जो आणवेदि] (भूमावुपविशति)

चाणक्यः—भद्र ! उपवर्णयेदानीं स्वनियोगवृत्तान्तं, अपि वृषलमनुरक्ताः प्रकृतयः ?

चरः—अथकिम्, देवे चन्द्रगुप्ते दृढमनुरक्ताः प्रकृतयः । किन्तु पुनः सन्त्यत्र नगरे अमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानाः त्रयः पुरुषाः, ये देवस्य चन्द्रश्रियः श्रियं न सहन्ते । [अहइं, देवे चंदउत्ते दिढं अनुरताओ पइदिओ । किंतु उण संति एत्थ णअरे अमच्च रक्खसेण सह पढमं समुप्पण्ण सिणेह बहुमाणा पुरिसा । जे देअस्स चन्दसिरिणो सिरिं ण सहंति ॥]

चाणक्यः (सक्रोधं) ननु वक्तव्यं–स्वजीवितं न सहन्ते–इति । भद्र ! अपि ज्ञायन्ते नामधेयतः ?

चरः—श्रृणोत्वार्यः । प्रथमं तावत् आर्यस्य रिपुपक्षे बद्धपक्षपातः क्षपणकः [सुणादु अज्जो, पढमं दाव अज्जस्स रिपुपक्खे बद्धपक्खपादो खवणओ ।]

चाणक्यः (आत्मगतं) अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणकः ।

चरः—जीवसिद्धिर्नाम सः । येन सा अमात्यराक्षसेन प्रमुक्ता विषकन्यका देवे पर्वतेश्वरे समावेशिता । [जीवसिद्धिणाम सो।-

जेण सा अमच्चरक्खसेण पउत्ता विस कण्णआ देए पव्वदेसो समावेसिबा ।]

चाणक्य:—(स्वगतं) जीवसिद्धिरेष तावत् अस्मत्प्रणिधिः । (प्रकाशं) भद्र ! अपरः कः ?

चरः—आर्य ! अपरः खलु अमात्यराक्षसस्य प्रियवयस्यः कायस्थ शकटदासो नाम । [अज्ज ! अवरा क्खु अमच्चरक्खसस्स पिअवअस्सो काअत्थो सअडदासो णाम ।]

चाणक्य:—(विहस्य, आत्मगतं) कायस्थ इति लघ्वी मात्रा । तथापि न युक्तं प्राकृतमपि रिपुं अवज्ञातुम् । तस्मिन् सुहृच्छद्मना सिद्धार्थको निक्षिप्तः । (प्रकाशं) भद्र ! तृतीयं श्रोतुमिच्छामि ।

चरः—तृतीयोऽपि अमात्यराक्षसस्य द्वितीयमिव हृदयं पुष्पपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम । यस्य गेहे कलत्रं न्यासीकृत्य अमात्यराक्षसः नगरादपक्रान्तः । [तिदीयो वि अमच्चरक्खसस्स दुदीअं हिअअं पुप्फउर वासी मणिअरसेट्ठी चंदणदासो णाम । जस्स गेहे कलत्तं णासी करुअ अमच्चरक्खसो णआरादो अवक्कांतो ।]

चाणक्य:—(आत्मगतं) नूनं सुहृत्तमः, न हि अनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति । (प्रकाशं) भद्र ! चन्दनदासस्य गृहे राक्षसेन कलत्रं न्यासीकृतमिति कथमवगम्यते भवता ?

चरः—आर्य ! इयं अङ्गुलिमुद्रा आर्यं अवगतार्थं करिष्यति । [अज्ज इअं अंगुलीयमुद्दा अज्जं अवगदत्थं करिस्सदि ।] (इति मुद्रामर्पयति ।)

चाणक्य:—(मुद्रामवलोक्य) (गृहीत्वा राक्षसस्य नामवाचयित्वा च, सहर्षं स्वगतं) ननु वक्तव्यं राक्षस एव अस्मदङ्गुलिप्रणयी संवृत्तः इति ।

भद्र ! अङ्गुलिमुद्राधिगमं विस्तरेण श्रोतुमिच्छामि ।

चरः – शृणोत्वार्यः । अस्ति तावदहमार्येण पौरजनचरित्रदर्शने नियुक्तः । ततः परगृहप्रवेशे परस्यानाशङ्कनीयेनानेन यम पटेन आहिण्डमानः मणिकारश्रेष्ठिनः चन्दनदासस्य गृहं प्रविष्टोऽस्मि । तत्र यमपटं प्रसार्य प्रवृत्तोऽस्मि गीतानि गातुम् ॥

[सुणोदु अज्जो । अत्थि दाव अहं अज्जेण पउरजण चरिददंसणे णिउत्तो, तदो परघर प्पवेशे परस्स अणासंकणीएण इमिणा जमपडेण आहिण्डंतो मणिआरसेट्ठिणो चन्दणदासस्स घरं पविट्ठोह्मि गीदाइं गाइदुं ।

चाणाक्यः — ततस्ततः ।

चरः —ततश्च एकस्मादपवरकात् पञ्चवर्षदेशीयः प्रियदर्शनीयशरीराकृतिः कुमारकः बालत्वसुलभकौतूहलोत्फुल्लनयनः निष्क्रमितुं प्रवृत्तः । ततः हा निर्गतः, हा निर्गत" इति शङ्कापरिग्रहनिवेदयिता तस्यैवापवरकस्याभ्यन्तरे स्त्रीजनस्य उत्थितः महान् कलकलः । ततः ईषद्द्वारदेशदापितमुख्या एकया स्त्रिया सः कुमारकः निष्क्रामन्नेव निर्भर्त्स्यावलम्बितः कोमलया बाहुलतया । तस्याश्च कुमारसंरोधसम्भ्रमप्रचलिताङ्गुलेः करात् पुरुषाङ्गुलिपरिणाहप्रमाण-घटिता विगलितेयं अङ्गुलिमुद्रिका देहलीबन्धे निपतितोत्थिता तया स्त्रिया अनवबुध्यमानैव मम चरणपार्श्वे समागत्य प्रणामनिभृता नववधूरिव निश्चला संवृत्ता । मयाऽपि आमात्यराक्षसस्य नामाङ्कि-तेति आर्यस्य पादमूलं प्रापिता । तस्मात् एषः अस्याः मुद्रायाः आगमः इति ॥ [तदो एक्कादो आवराकदो पंचवरिसदेसीओ पिअदंसणीय शरीराकिदी कुमारओ बालजणसुलह कोदूहलोप्फुल्लण-अणजुअलओ णिक्कमिदुं पउत्तो, तदो 'हा णिग्गदो हा णिग्गदो' त्ति

संका परिग्गह गिभृद गुरुओ नस्स जेव्द आवरकस्स अब्भंतरे इत्थि
आअणस्स उत्थिदो महंतो कलअलो ! तदो ईसिदुआर देसद
विदमुसीए एकए इत्थिआए सो कुमारओ णिक्कमंतो ज्जेव
णिब्भज्छिय अवलंबिदो कोमलाए बाहलदाए । तस्सा अ कुमा
संरोह अंभमप्प चलिदंगुलिदो करादो पुरिसंगुलि परिणाहप्पमाण
घडिआ विअलिदा इअं अंगुलिमुद्दिआ देहली बद्धम्मि णिपडिआ
ताए इत्थिआए अणवबुद्धंत ज्जेव्व मम चलाणपासं समागच्छि
पणामणिहुआ णवमहूव्व णिच्चळा संवुत्ता । मम वि अमच्चरक्ख
स्स णामंकिदेत्ति अज्जस्स पादमूलं पविदा । ता एसो इमा
झुद्दाए आगमो त्ति ॥]

चाणक्य:—भद्र । श्रुतम् । अपसर । न चिरात् अस्य परिश्रमस्य अनुरू
फलं अधिगमिष्यसि ।

चर:—यदार्य आज्ञापयति । [जं अज्जो आणवेदि]

(इति निष्क्रान्तः)

चाणक्य:—शार्ङ्गरव !

शिष्य:—(प्रविश्य) उपाध्याय ! आज्ञापय ।

चाणक्य:—वत्स ! मसीभाजनं पत्रं चोपानय ।

शिष्य: — यदाज्ञापयत्युपाध्यायः ।

(इति निष्क्रम्य, पुनः प्रविश्य)

उपाध्याय ! इदं मसीभाजनम्, पत्रं च ।

चाणक्य:—(गृहीत्वा, स्वगतम्) किमत्र लिखामि ? अनेन खलु लें
राक्षसो जेतव्यः । (विचिन्त्य) अथवा न लिखामि ।
अनभिव्यक्तमेव तावदास्ताम् । (प्रकाशं) शार्ङ्गरव । शार्ङ्गरव

शिष्यः—(प्रविश्य) उप ध्याय ! आज्ञापय ।

चाणक्यः—श्रोत्रियाक्षराणि प्रयत्नेन लिखितान्यपि नियतं अस्फुटानि भवन्ति । तदुच्यतां अस्मद्वचनात् सिद्धार्थकः (कर्णे एवमिव) 'एभिरक्षरैः केनापि किमपि कस्यापि स्वयं वाच्यम्' इति अदत्त-बाह्यनामानं लेखं शकटदासेन लेखयित्वा मां उपतिष्ठस्व । न चाख्येयमस्मै 'चाणक्यो लेखयति' इति ॥

शिष्यः—तथा (इति निष्क्रान्तः)

चाणक्यः (स्वगतं) हन्त ! जितो मलयकेतुः ।

सिद्धार्थकः—(लेखहस्तः प्रविश्य) जयतु जयत्वार्यः । आर्य ! अयं सः शकटदासेन स्वहस्तलिखितो लेखः । [जेदु जेदु अज्जो । अज्ज ! अअं सो सअडदासेण सहत्थलिखिदो लेहो ।]

चाणक्यः—(गृहीत्वा, निरीक्ष्य) अहो ! दर्शनीयता अक्षराणाम् । (इत्यनुवाच्य) भद्र ! अनया मुद्रयैनम् ।

सिद्धार्थकः—यदार्य आज्ञापयति । [जं अज्जो आणवेदित्ति] (तथा कृत्वा) आर्य ! अयं स मुद्रितो लेखः । [अज्ज ! अअं सो मुद्दिदो लेहो ।]

चाणक्यः—शार्ङ्गरव ! शार्ङ्गरव !

शिष्यः—(प्रविश्य) उपाध्याय ! आज्ञापय ।

चाणक्यः—उच्यतां मद्वचनात् कालपाशिको दण्डपाशिकश्च, यथा वृषलः समाज्ञापयति 'य एषः क्षपणको जीवसिद्धिर्नाम राक्षसप्रयुक्तः विषकन्यया पर्वतेश्वरं घातितवान् । स एनमेव दोषं प्रख्याप्य सनिकारं नगरात् निर्वास्यताम्' इति ।

शिष्यः—तथा । (इति परिक्रामति)

चाणक्य — वत्स ! तिष्ठ तिष्ठ । 'योऽयमपरः कायस्थः शकटदासो ना राक्षसप्रयुक्तः नित्यं अस्मच्छरीरं अभिद्रोग्धुम् इह प्रयतते । चाप्येनं दोषं प्रख्याप्य शूलमारोप्यतां, गृहजनश्चास्य बन्धनागारे प्रवेश्यताम् । ' इति ।

शिष्यः—तथा (इति निष्क्रान्तः ।)

चाणक्यः—(चिन्तां नाटयित्वा, स्वगतं) अपि नाम दुरात्मा राक्षसो गृह्येत!

शिष्यः—(प्रविश्य) उपाध्याय ! कालपाशिको दण्डपाशिकश्च उपाध्यायं विज्ञापयतः 'इदमनुष्ठीयते देवस्य चन्द्रगुप्तस्य शासनम्' इति।

चाणक्यः—शोभनम् । वत्स ! मणिकारश्रेष्ठिनं चन्दनदासं इदानीं द्रष्टुमिच्छामि ।

शिष्यः—यदाज्ञापयत्युपाध्यायः (इति निष्क्रम्य, चन्दनदासेन सह पुनः प्रविश्य) इत इतः श्रेष्ठिन् !

चन्दनदासः - (स्वगतं)

चाणक्येनाकरुणेन
सहसा शब्दायितस्यापि जनस्य ।
निर्दोषस्यापि शङ्का
किं पुनर्मम जातदोषस्य ॥

[चाणक्कम्मि अकरुणे
सहसा सद्दाविदस्स वि जणस्स ।
णिद्दोसस्स वि संका
किं उण मह जाददोसस्स ॥]

तद्भणिता मया धनसेनप्रमुखाः निजनिवेशसंस्थिताः कदाऽपि चाणक्यहतको गेहं मे विचिनोति । तदवहिताः निर्वहत भर्तुः अमात्यराक्षसस्य

गृहजनम् । मम तावत् यद्भवति तद्भवतु, इति । [ता भणिदा मए धणसेणप्पमुहा णिअणिवेस संठिआ कदा वि चाणक्क हदओ गेहं मे विचिण्णावेदि, ता अवहिदा णिव्वहेह भट्टिणो अमच्च-रक्खसस्य घरअणं, मह दाव जं होदि तं होदुत्ति ।]

शिष्यः—भोः श्रेष्ठिन् ! इत इतः ।

चन्दनदासः—अयमागतोऽस्मि । [अअं आगदोम्हि] ।

[उभौ परिक्रामतः]

शिष्यः—उपाध्याय ! अयं श्रेष्ठी चन्दनदासः ।

चन्दनदासः—(उपसृत्य) जयतु जयत्वार्यः । (यण् सन्धि)

[जेदु जेदु अज्जो ।]

चाणक्यः—(नाट्येनावलोक्य) भोः श्रेष्ठिन् ! स्वागतम् । इदमासनम्, आस्यताम् ।

चन्दनदासः—(प्रणम्य) किं न जानात्यार्यः यथा अनुचितः उपचारः हृदयस्य परिभवादपि महद्दुःखमुत्पादयति । तस्मात् इहैवोचितायां भूमौ उपविशामि । [किं ण जाणादि अज्जो, जह अणुचिदो उवआरो हिअअस्स परिहवादोवि महंतं दुःखमुप्पादेदि । ता इह ज्जेब्व उचिदाए भूमिए उवविसामि ।]

चाणक्यः—भोः श्रेष्ठिन् । मा मैवम् । उचितमेवैतत् अस्मद्विधैः सह भवतः । तदुपविश्यतां आसने एव ।

चन्दनदासः—(स्वगतं) उपक्षिप्तमनेन किमपि । [उवक्खिदमणेण किंपि] (प्रकाशं) यदार्य आज्ञापयति । [जं अज्जो आणवेदि]

चाणक्यः—भोः श्रेष्ठिन्! चन्दनदास! अपि प्रचीयन्ते संव्यवहाराणां वृद्धिलाभाः?

चन्दनदासः—(स्वगतं) अत्यादरः शङ्कनीयः। [अच्चादरो संकणीअ] (प्रकाशं) आर्य! अथ किम्। आर्यस्य प्रसादेन अखण्डिता वणिज्या। [अज्ज! अध इं। अज्जस्स पसाएण अखण्डिदा वणिज्जा।]

चाणक्यः—भोः श्रेष्ठिन्! अपि कदाचित् चन्द्रगुप्तदोषाः अतिक्रान्त पार्थिवगुणान् अधुना स्मारयन्ति प्रकृतीः?

चन्दनदासः—(कर्णौ पिधाय) शान्तं पापम्। शारदनिशासमुद्गतेन पूर्णिमाचन्द्रेण चन्द्रश्रिया अधिकं नन्दन्ति प्रकृतयः। [संतं पावं। सारअणिसा समुग्गदेण विअ पुण्णिमाचंदेण चंदसिरिणा अधिअं णंदंति पइदिओ।]

चाणक्यः—भोः श्रेष्ठिन्! यद्येवं प्रीताभ्यः प्रकृतिभ्यः प्रतिप्रियमिच्छन्ति राजानः।

चन्दनदासः—आज्ञापयत्वार्यः, किं कियद्वा अर्थजातं अस्मज्जनादिष्यते इति। [आणवेदु अज्जो, किं कित्तिअं वा अत्थजादं इमादो जणादो इच्छीअदि त्ति?]

चाणक्यः—भोः श्रेष्ठिन्! चन्द्रगुप्तराज्यमिदम्। न नन्दराज्यम्। यतः नन्दस्यैवार्थरुचेः अर्थसम्बन्धः प्रीतिमुत्पादयति। चन्द्रगुप्तस्य तु भवतां अपरिक्लेश एव।

चन्दनदासः—(सहर्षं) आर्य! अनुगृहीतोऽस्मि।

[अज्ज! अणुग्गहीदोम्हि।]

चाणक्यः—भोः श्रेष्ठिन् ! स च अपरिक्लेशः कथमाविर्भवति ? इति पुनः प्रष्टव्याः स्मो भवता ।

चन्दनदासः – आज्ञापयत्वार्यः । [आणवेदु अज्जो]

चाणक्यः—संक्षेपतः राजनि अविरुद्धाभिः वृत्तिभिः भवितव्यम् ।

चन्दनदासः—आर्य ! कः पुनरधन्यः आर्येणावगम्यते ? [अज्ज ! को उण अधण्णो अज्जेण अवगच्छीआदि ?]

चाणक्यः—भवानेव तावत्प्रथमः ।

चन्दनदासः—(कर्णौ पिधाय) शान्तं पापं, शान्तं पापम् । कीदृशः तृणानां अग्निना सह विरोधः ? [संतं पावं सन्तं पावं, कीदिसो तिणणं अग्गिणा सह विरोहो ?]

चाणक्यः—अयमीदृशो विरोधः, यत्-त्वं अद्यापि राजापथ्यकारिणः अमात्यराक्षसस्य गृहजनं स्वगृहे रक्षसि ।

चन्दनदासः—आर्य ! अलीकमेतत् । केनापि अनार्येण आर्यस्य निवेदितम् । [अज्ज ! अलीअं एदं केणावि अणज्जेण अज्जस्स णिवेदिदं ।]

चाणक्यः – भोः श्रेष्ठिन् ! अलमाशङ्कया । भीताः पूर्वराजपुरुषाः पौराणां अनिच्छतामपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति । ततः तत्प्रच्छादनमेव दोषमुत्पादयति ।

चन्दनदासः—एवं नु इदम् । तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनः । [एवंण्णेदं । तस्सिं समये आसी अह्म घरे अमच्चरक्खसस्स घरअणो ।

चाणक्यः—प्रथममनृतं इदानीं 'आसित्' इति, परस्परविरोधिनी वचने

चन्दनदासः—एतावदेवास्ति मे वाक्छलम् । [एत्तिअं जेव्व अत्थि वाअ्छलं ।]

चाणक्यः—भोः श्रेष्ठिन् । चन्द्रगुप्ते राजनि न परिग्रहः छलानाम् । समर्पय राक्षसस्य गृहजनम् । अच्छलं भवतु भवतः ।

चन्दनदासः—आर्य ! ननु विज्ञापयामि । तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनः इति । [अज्ज । णं विण्णावेमि, तस्सिं समय आसी अह्मघर अमच्चरक्खसस्स घरअणो त्ति ।]

चाणक्यः—अथेदानीं क्व गतः ?

चन्दनदासः—न जानामि कुत्र गत इति । [ण जाणामि कहिं गदोत्ति ।]

चाणक्यः—(स्मितं कृत्वा) कथं न ज्ञायते नाम ? भोः श्रेष्ठिन् । शिरसि फणी, दूरे तत्प्रतीकारः । अन्यच्च नन्दमिव विष्णुगुप्तः चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यतीति मैवं मंस्थाः । पश्य—

विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीर्वक्रनासादिभिः
नन्दे जीवति या तदा न गमिता स्थैर्यं चलन्ती मुहुः
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्तुं व्यवस्येत्पृथक् ॥ १२॥

(नेपथ्ये कलकलः)

चाणक्यः—शार्ङ्गरव ! ज्ञायतां किमेतत् ?

शिष्यः—यदाज्ञापयत्युपाध्यायः । (निष्क्रम्य, पुनःप्रविश्य) उपाध्याय ।

एषः राज्ञः चन्द्रगुप्तस्याज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वास्यते । अनुनासिक सान्द्रः

चाणक्यः— क्षपणकः अहह । अथवा अनुभवतु राजापथ्यकारित्वस्य फलम् । भोःश्रेष्ठिन् चन्दनदास ! एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा । तत्क्रियतां पथ्यं सुहृद्वचः । समर्प्यतां राक्षसगृहजनः चिरमनुभूयन्तां विचित्राः राजप्रसादाः ।

चन्दनदासः—नास्ति मे गृहे अमात्यराक्षसगृहजनः । [णत्थि मे गेहे अमच्चरक्खसस्स घरअणो ।]

(नेपथ्ये पुनः कलकलः)

चाणक्यः – शार्ङ्गरव ! ज्ञायतां पुनः किमेतत् ?

शिष्यः—तथा (इति निष्क्रम्य पुनः प्रविश्य) उपाध्याय ! असौ राजाज्ञया राजापथ्यकारी कायस्थः शकटदासः शूलमारोपयितुं नीयते ।

चाणक्यः – स्वकर्मफलभाग् भवतु । भोःश्रेष्ठिन् । एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः । तद्रक्ष परकलत्रेण आत्मनः कलत्रं जीवितं च ।

चन्दनदासः—आर्य ! किं मे भयं दर्शयसि ? सन्तमपि गेहे अमात्यराक्षसस्य गृहजनं न समर्पयामि । किं पुनरसन्तम् ? [अज्ज ! किं मे भअं दंसेसि ? संतंवि गेहे अमच्चरक्खसस्स घरअणं न समप्पेमि । किं उण असंतं ?]

चाणक्यः—चन्दनदास ! एष ते निश्चयः ?

चन्दनदासः—बाढं, एष मे स्थिरो निश्चयः । [बाढं, एसो मे थिरो णिच्छओ]

चाणक्यः – (स्वगतं) साधु चन्दनदास ! साधु ।

सुलभेष्वर्थलाभेषु परसंवेदने जने ।
क इदं दुष्करं कुर्यात् इदानीं शिविना विना ।

(प्रकाशं) चन्दनदास ! एष ते निश्चयः ?

चन्दनदासः — बाढम् । [बाढं]

चाणक्यः — (सक्रोधं) दुरात्मन् ! दुष्टवणिक् ! अनुभूयतां तर्हि राजक्रोधः

चन्दनदासः - सज्जोऽस्मि । अनुतिष्ठतु आर्यः आत्मनोऽधिकारसदृश [सज्जोह्मि । अणुचिट्ठदु अज्जो अत्तणो अहिआरस्स सरिसं ।]

चाणक्यः — (सक्रोधं) शार्ङ्गरव ! उच्यतां अस्मद्वचनात् कालपाशिको द पाशिकश्च । 'शीघ्रमयं दुष्टवणिक् निगृह्यताम् । अथवा तिष्ठ उच्यतां दुर्गपालो विजयपालः—गृहीतगृहसारमेनं सपुत्रकलत्रं सं रक्ष तावत्, यावत् मया वृषलाय कथ्यते । स एवास्य प्राण दण्डं आज्ञापयति ।

शिष्यः — यदाज्ञापयत्युपाध्यायः । श्रेष्ठिन् ! इत इतः ।

चन्दनदासः — (उत्थाय) आर्य ! अयमागच्छामि । [अज्ज ! अअ अच्छामि ।] (स्वगतं) दिष्ट्या मित्रकार्येण मे विनाशो जनि न पुनः पुरुषदोषेण । दिट्ठिआ मित्तकज्जेण मे विणासो जणि ण पुरिसदोसेण] (शिष्येण सह निष्क्रान्तः) ।

चाणक्यः – (सहर्षं) हन्त ! लब्ध इदानीं राक्षसः। कुतः ?

त्यजत्यप्रियवत् प्राणान् यथा तस्यायमापदि ।
तथैवास्यापदि प्राणाः नूनं तस्यापि न प्रियाः ॥ १४

(नेपथ्ये कलकलः)

चाणक्यः—शार्ङ्गरव !

शिष्यः—(प्रविश्य) उपाध्याय ! आज्ञापयतु ।

चाणक्यः—ज्ञायतां किमेतत् ?

शिष्यः—(निष्क्रम्य, विभाव्य, पुनःप्रविश्य, संभ्रान्तः) उपाध्याय ! उपाध्याय ! एष खलु शकटदासं वध्यभूमेरादाय समपक्रान्तः सिद्धार्थकः ।

चाणक्यः—(स्वगतं) साधु सिद्धार्थक ! साधु । कृतः कार्यारम्भः । (प्रकाशं) (सक्रोधं) वत्स ! उच्यतां भागुरायणो यथात्वरितमेनं सम्भावयेति ।

शिष्यः—(तथा कृत्वा) (प्रविश्य, सविषादं) उपाध्याय ! हा धिक् ! कष्टम् । अपक्रान्तो भागुरायणोऽपि ।

चाणक्यः—(स्वगतं) व्रजतु कार्यसिद्धये । (प्रकाशं) वत्स । अलं विषादेन । पश्य—

ये याताः किमपि प्रधार्य हृदये पूर्वं गता एव ते
ये तिष्ठन्ति भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः ।
एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका
नन्दोन्मूलनदृष्टवीर्यमहिमा बुद्धिस्तु मा गान्मम ॥ १५ ॥

(आत्मगतं) दुरात्मन्! राक्षस! क्वेदानीं यास्यसि? एषोऽ
मचिराद् भवन्तं—

स्वच्छन्दमेकचरमुज्ज्वलदानशक्तिं
उत्सेकिना बलमदेन विगाहमानम्।
बुद्ध्या निगृह्य वृषलस्य कृते क्रियायां
आरण्यकं गजमिव प्रगुणीकरोमि ॥ १६ ॥

like a wild elephant

(इति निष्क्रान्ताः सर्वे)

I will rope you

---

## ॥ टिप्पण्यः ॥

(अङ्गुलिमुद्राधिगमः)

(श्लोकः–१) धन्या—ते शिरसि स्थिता इयं धन्या का ? शशिकला। अस्याः नाम एतत् किं नु ? अस्याः नामैव एतत्। ते परिचितमपि कस्य हेतोः विस्मृतम् ? नारीं पृच्छामि, न इन्दुम्। यदि इन्दुः न प्रमाणं विजया कथयतु। इति सुरसरितं देव्या निह्नोतुम् इच्छोः विभोः शाठ्यं वः अव्यात् ॥

नाटकस्य निर्विघ्नपरिसमाप्त्यर्थं कविः विशाखदत्तः मङ्गलमाचरति। इदं च नान्दीपद्यम्। 'धन्या केयं स्थिता ते शिरसि' इति, जटाजूटे निलीनां दिव्ययुवतिरूपधारिणीं गङ्गां अवलोक्य सासूयायाः पार्वत्याः अयं कुटिलः प्रश्नः पार्वती शिवस्य वामाङ्गे तिष्ठति, एषा गङ्गा तु तस्य श्लाघ्ये उत्तमाङ्गे स्थिता इति 'धन्या'शब्देन असूया सूचिता ॥ गङ्गां गूहितुं शिवः शिरःस्थं चन्द्रमसं निर्दिश्य 'शशिकला' इति छलोक्त्या उत्तरं ददाति। युवत्या नाम शशिकला किम् ? इति पार्वती पुनः पृच्छति। शशिकलाया नाम जानन्त्यपि कथं न स्मरसि ? इति शिवस्य प्रश्नः। तदा नारीं (गङ्गां) पृच्छामि, न चन्द्रमसं इति देवी ऋजूक्त्या वदति। यदि नारीं प्रति प्रश्नः क्रियते, तर्हि ते सखी विजया कथयतु, इति शिवस्योत्तरम्। पार्वत्याः प्रश्नस्य ऋज्वर्थं जानन्नपि सुरनदीं गङ्गां तस्या गूहितुमिच्छन् शिवः छलोक्तिमाश्रयति। शिवस्यैषा छलोक्तिः अध्येतॄन् सामाजिकांश्च रक्षतु–इति नमस्कर्तुराशंसा।

सुरसरितं—गङ्गाम्। निह्नोतुं—गूहितुम्। विभोः—शिवस्य।

शाठ्यं - छलोक्तिः । अव्यात्--रक्षतु । अत्र स्रग्धरावृत्तम्

नान्दी --नन्दन्ति देवाः अनया इति नान्दी । संस्कृतरूपकेषु पूर्वरङ्ग अन्तिममङ्गं इयं नान्दी इति । नाटकस्य निर्विघ्नपरिसमाप्त्यै नान्दी उपयुज्यते । नान्द्याश्चेदं लक्षणम्—

"यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥
देवद्विजनृपादीनां अशीर्वचनपूर्विका ।
नन्दन्ति देवता यस्यां तस्मान्नान्दीति संज्ञिता ॥
इति ॥

यद्यपि - सर्वाणि संस्कृतरूपकाणि मङ्गलश्लोकरूपेण नान्द्याचर प्रारभ्यन्ते । तथापि-भासप्रणीतेषु रूपकेषु नान्द्याः अन रूपकारम्भः भवति अतः तत्र नान्द्याः स्वरूपं कीदृशं भ इति विषये विद्वत्सु नैके ऊहाः विद्यन्ते । साधारणतया भ रूपकेषु गीतवाद्यवादनादिरूपा नान्दी. अथवा रङ्गपूजैव ना इत्यादि वक्तुं शक्यते ।

धन्या केयमिति पद्ये आशीरर्थरूपं मङ्गलमाचरितम् ।

अतिप्रसङ्गेन - -अतिविस्तरेण ।

परिषदा —सभया -दकारान्तः स्त्री. तृ. ए

प्रयुञ्जानस्य—वर्तमानकृदन्तरूपम् ।

श्लोकः-२) बालिशस्यापि सत्क्षेत्रपतिता कृषिः वर्धयते ।
स्तम्बकरिता वप्तुः गुणं न अपेक्षते ।

बालिशः — मन्दमतिः । अत्र- बीजावापे अनभिज्ञःइत्यर्थः ।

सत्क्षेत्रपतिता—ससारभूमौ पतिता ।

शाले:—व्रीहिधान्यस्य । स्तम्बकरिता स्तोमरूपेण वृद्धिशीलता । वप्तृशब्दस्य षष्ठीविभक्त्येकवचनम् ।

गुणं—अत्र दक्षत्वादिकम् ।

न अपेक्षते—अप+ईक्ष्. लट्. प्र. ए

यदि भूमिः सारभूताऽस्ति, तदा कृषिकर्मानभिज्ञेनापि कृतः बीजावापः फलप्रदो भवति। तथैव नटवर्गस्य क्वचित् स्खालित्येऽपि सामाजिकाः रसानुभवं प्राप्नुवन्ति इति । अत्र अप्रस्तुतप्रशंसा अर्थान्तरन्यासश्च अलङ्कारौ ॥

गृहाः नित्यपुंलिङ्गबहुवचनान्तरूपमिदम् गृहं इत्येवार्थं बोधयति ।

नेपथ्यम्—नटानां वेषभूषणालङ्कारप्रकोष्ठम् ॥

(श्लोकः—3) गुणवति-सौशील्य-गृहकृत्यदक्षत्वादिगुणशालिनि ! (नीतिविषये तु षड्गुणाः=सन्धिः, विग्रहः, यानं, आसनं, द्वैधं, आश्रयः -इति ।) उपायनिलये-गृहकृत्यदक्षे ! (नीतिपक्षे—सामदानभेददण्डाः उपायाः) स्थितिहेतो-कुटुम्बसंरक्षणादिसमर्थे ! (नीतिपक्षे-राज्यसंरक्षणसाधनीभूते !) त्रिवर्गस्य साधिके, धर्मार्थकामानां सम्पादनकारिणि ! (नीतिपक्षे क्षयः—स्थानं—वृद्धिः—इति त्रिवर्गः) मद्भवननीतिविद्ये—मद्गृहकार्यसम्पादिके ! (नीतिपक्षे-राज्यनिर्वहणविद्ये) आर्ये ! नटीसूत्रधारौ मिथः आर्येति सम्बोधनमर्हतः इति नाट्यानुशासनम् । कार्यात्—कार्यार्थम् द्रुतं=सत्वरं (अव्ययम्) उपेहि-आगच्छ । (उप+इण्, लोट्.म.ए) अत्र श्लोके श्लेषालङ्कारः । आर्यावृत्तम् ॥

(श्लोकः-4) सकेतुः क्रूरग्रहः इदानीं पूर्णमण्डलं चन्द्रमसं बलात् अभि
भवितुमिच्छति । एनं तु बुधयोगः रक्षति ॥

सकेतुः क्रूरग्रहः राहुकेत्वोः एकशरीरत्वात् अभेदेन अत्र राहुरित्य
सङ्गच्छते । पूर्णमण्डलं यस्य, तम् । अभिभवितुं ग्रसितुम्
नाशयितुं वा । एनं-चन्द्रमसम् । राहुः बलात् पूर्णमण्डलं च
ग्रसितुमिच्छति । परन्तु बुधग्रहस्य सम्बन्धः तं रक्षतीति भावः

चाणक्यपक्षे तु क्रूरग्रहः राक्षसः, सकेतुः मलयकेतुना सहितः, चन्द्र
चन्द्रगुप्तं, बलात् महता म्लेच्छबलेन, अभिभवितुं पराभवि
बुधस्य — नीतिनिपुणस्य चाणक्यस्य योगः-उपायः । मल
केतुना सह महता म्लेच्छबलेन राक्षसः चन्द्रगुप्तं पराजितु
गच्छति । परं तु चाणक्यस्योपायः एनं रक्षति इति ज्ञेय
अत्र मुद्रालङ्कारः । ''सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः
इति तल्लक्षणम् । आर्यावृत्तम् ॥

श्लोकः-5) क्रोधाग्नौ येन प्रसभं नन्दवंशः अदाहि, स एषः कुटिलम
कौटिल्यः चन्द्रस्य ग्रहणं इतिश्रुतेः सनाम्नः मौर्येन्दोः द्विषदभियो
इत्यवैति ॥

क्रोधाग्नौ —क्रोध एवाग्निः तस्मिन् । कौटिल्यः—कुटिल इतिपुरु
गोत्रापत्यं पुमान् चाणक्यः । कुटिलमतिः-कुटिला मतिर्यस्य स
वक्रबुद्धिः । प्रसभं बलात् । (अव्ययम्) अदाहि भस्मीकृ
(दह. लुङ्. प्र. ए कर्मणि) श्रुतेः-श्रुत्वा । सनाम्नः-समानं
यस्य । सदृशनामधेयस्य । ग्रहणं—उपरागः । अत्र आक्रम
मित्यर्थः । मौर्येन्दोः—मौर्यकुलीनस्य चन्द्रगुप्तस्य । द्विषदभियोग
शत्रूणामाक्रमणम् । द्विषतां अभियोगः । अवैति-जानाति

अत्र श्लोके—प्रहर्षिणीवृत्तम् ॥

प्रस्तावना स्थापना आमुखं इत्येतानि पर्यायपदानि । प्रस्तावनायां सूत्रधारः नटीं, सहायं (मारिषं) विदूषकं वा ब्रूते । तयोः संभाषणे कविकाव्यविचारादिकमपि प्रसक्तं भवेत् । सम्भाषणमुखेन पात्रपरिचयोऽपि क्रियते । यथोक्तं दशरूपके—

"सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् । स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् । प्रस्तावना वा–" इति । उद्घात्यकः, कथोद्घातः, प्रयोगातिशयः प्रवर्तकः, अवलगितः इति प्रस्तावनायां पञ्चप्रकाराः । अत्र उद्घात्यकः इति प्रकारः दृश्यते । तल्लक्षणं तु साहित्यदर्पणे—

"पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पैरैरन्यैः स उद्घात्यक उच्यते ॥" इति ॥

नेपथ्ये वर्तमानः पुरुषः रङ्गभूमौ वर्तमानस्य पात्रस्य वचांसि श्रुत्वा अन्यथा व्याख्याय रङ्गं प्रविशति । मुद्राराक्षसनाटकेऽस्मिन् चाणक्यः सूत्रधारस्य 'क्रूरग्रहः' इत्यादिवाक्यानि श्रुत्वा 'चन्द्रं' इत्युक्ते चन्द्रगुप्तमिति मत्वा 'मयि स्थिते कः चन्द्रगुप्तमभिभवितुमिच्छति' इति वदन् प्रविशति । अतः एषा प्रस्तावना उद्घात्यकः इत्युच्यते ।

मुक्तां शिखां परामृशन्—नन्दकुलनाशाय प्रतिज्ञाकरणावसरे मुक्ता शिखा, नाटकस्यान्ते चाणक्येन बध्यते । अत एव इदानीं शिखां परामृशन्- स्पृशन् अस्ति ।

(श्लोकः 6) आस्वादितद्विरदशोणितशोणशोभां सन्ध्यारुणां शशलाञ्छन कलामिव स्फुरन्तीं दंष्ट्रां जृम्भाविदारितमुखस्य हरेर्मुखात् कोः परिभूय हर्तुमिच्छति ? ॥

द्विरदः—द्वौ रदौ यस्य सः । गजः ॥ शोणः-रक्तकमलवर्णः, को नदच्छविः । शोणितं-रक्तम् । सन्यारुणां-सन्ध्याकालीनर वर्णयुताम् । शशलाञ्छनस्य-शश एव लाञ्छनं यस्य तस्य चन्द्रस्य ॥ स्फुरन्तीं-दीप्तिमतीम् । जृम्भाविदारितमुख जृम्भाय विदारितं-विस्तृतं मुखं यस्य, तस्य, हरेः-सिंहस परिभूय-पराजित्य । बलादित्यर्थः ॥ यथा सिंहमुखात् दं हर्तुं न कोऽपि शक्तः, तथैव चाणक्ये स्थिते चन्द्रगुप्तमभिभूय त राज्यश्रियं अपहर्तुं न कोऽपि समर्थः भवेदित्यर्थः । अत्र उपमा अप्रस्तुतप्रशंसा च अलङ्कारौ ॥

(श्लोकः 7) नन्दकुलकालभुजगीं कोपानलबहललोलधूमलतां मे शिख को वध्यः अद्यापि बध्यमानां नेच्छति ?

नन्दकुलकालभुजगीं — नन्दवंशस्य यमस्वरूपिणीं कृष्णसर्पिणीमिव स्थिताम्। कोपानलः—कोपरूपः अग्निः । तस्य बहला-निबिडा च लोला चञ्चला च या धूमलता धूमराजिः (धूमलतेव) स्फुरतीम् । मे-मम-इमां शिखां बध्यमानां-(बधू कर्मणि वर्तमान - कृदन्तं द्वि. ए) नन्दनाशेन यद्यपि पूर्णा मे प्रतिज्ञा, तथापि को व मम प्रतापानभिज्ञः स्वमरणं अभिलषति इति भावः । अ मालारूपकालङ्कारः । आर्यावृत्तम् ।

कार्यानुष्ठानं — कार्यार्पणम् । उपाध्याय—दुःशीलता-सहभूः—स्वाभाविक उपाध्यायेन सहभवतीति उपाध्यायसहभूः । दुःशीलता—निन्द

शीलता । वृषल-चन्द्रगुप्तम् । यद्यपि वृषलशब्दः हीनार्थ-द्योतकः । तथापि चाणक्यः अत्र वात्सल्यादेवं सम्बोधयति । अभियोक्तुं–आक्रमणं कर्तुम् । निस्तीर्णा–पारं गता । (निस्+तृ. भूतकर्मणि कृदन्तः) सर्वलोकप्रकाशं-सर्वेषां लोकानां प्रकाशो यथा स्यात् तथा । वृषलापेक्षया शस्त्रं धारयामि, चन्द्रगुप्तरक्षाहेतोः. न तु अधिकारापेक्षया इति मन्तव्यम् ॥

(श्लोकः —8) येन मया भुवः शल्या इव (भूताः) नवनन्दाः समुत्खाताः. सरसि नलिनीव मौर्ये लक्ष्मीः स्थिरपदा कृता । (येन च मया) अभियुक्तेन मनसा द्वयोः कोपप्रीत्योः द्वितयं सारं फलं द्विषति च सुहृदि च तुल्यं विभक्तम् ॥

शल्याः—बाणाः । उत्खाताः–आमूलमुद्धृताः । लक्ष्मीः राज्यश्रीः । स्थिरं पदं यस्याः सा । अभियुक्तेन मनसा–तदेकचित्ततया । सारं न्याय्यम् । द्वितयं-द्विविधम् । द्विषति–शत्रौ । (कोपः) सुहृदि–मित्रे (प्रीतिः) इति फलद्वयम् ॥ तुल्यं–समानम् । विभक्तं विभज्यकृतम् । नन्दनिग्रहः चन्द्रगुप्तानुग्रहः इति योग्यं फलद्वयम् । विभज्य स्थापितमित्यर्थः । अत्र उपमालङ्कारः । शिखरिणीवृत्तम् ॥

मन्त्रिबृहस्पते — मन्त्रिश्रेष्ठ !

(श्लोकः–9) ऐश्वर्यात् अनपेतं ईश्वरं अयं लोकः अर्थतः सेवते । ये विपत्तिषु तं अनुगच्छन्ति ते पुनः तत्प्रतिष्ठाशया (तथा कुर्वन्ति) । ये भर्तुः प्रलयेऽपि पूर्वसुकृतासङ्गेन निस्सङ्गया भक्त्या कार्यधुरां वहन्ति, ते त्वादृशाः कृतिनः दुर्लभाः ॥

अयं लोकः —साधारणो जनः । अपेतं - रहितम् । अनपेतं युक्तम्
ऐश्वर्यादनपेतं सुसमृद्धम् । प्रभुत्वादच्युतमित्यर्थः । ईश्वर
प्रभुम् । अर्थतः - स्वप्रयोजनहेतोः । सेवते परिचरति । विपदि
आपत्सु । तत्प्रतिष्ठाशया - स्वामिनःपुनरधिकारप्राप्त्याशया
प्रलये—सम्पूर्णनाशे । पूर्वसुकृतासङ्गेन प्रागाचरितस्य उपकार
कारणात् । निस्सङ्गया भक्त्या निर्व्याजप्रेम्णा । कार्यधुरां
कार्यभारम् । कृतिनः धन्याः । स्वामिनः नाशानन्तरम्
तत्कृतोपकारं स्मरन्तः निःस्वार्थेन ये कार्यभारं वहन्ति, तादृशाः
अनेन श्लोकेन चाणक्यस्य गुणग्राहित्वं, चाणक्येन राक्षसप्रशंसा
सूचिता । शार्दूलविक्रीडितं वृत्तम् ।

मयाऽपि यत्नः । अहं शयानो न तिष्ठामि इति अत्र प्रयोगान्तरम्
शयानः- शीङ्, शानच्, वर्तमानकृदन्तं । यथाशक्ति—शक्ति
मनतिक्रम्य । यमपटेन—यमचित्रेण ॥

(श्लोकः–10) यमस्य चरणौ प्रणमत । अन्यैर्देवैः किं कार्यम् ? एष स
अन्यभक्तानां परिस्फुरन्तं जीवं हरति । प्रणमत । (प्र+नम
लोट् म.ब ) किं कार्यं किंप्रयोजनम् । 'परिस्फुरन्तं वेपमानम्
क्लिश्यमानम् । यमपटदर्शनेन अर्थसङ्ग्रहे याचकानामुपाय
कश्चित् । बाणभट्टस्य हर्षचरितेऽपि यमपट्टिकायाः प्रसङ्ग
दृश्यते । यमपटधरः अत्र चाणक्येन नियुक्तः एकः गुप्तचर
इत्यग्रे ज्ञायते । दर्शयन् । प्रेरणार्थकवर्तमानकृदन्तः
धर्मभ्रातुः गृहं—धर्मेण जातः भ्राता, तस्य गृहम् । एकस्मिन्
गुरौ अधीतवन्तः शिष्याः । तथा धार्मिकवृत्तिबान्धवाश्च परस्पर
धर्मभ्रातरः । धर्मवित्तरः - धर्मं वेत्तीति धर्मवित् । अतिशयेन
धर्मवित्-धर्मवित्तरः । तरप्प्रत्ययान्तोऽयं शब्दः

कस्य चन्द्रोऽनभिप्रेतः । कः चन्द्रगुप्तं द्वेष्टि ? इति भावः । प्रकृतिः—अत्र प्रजाः इत्यर्थः । कुप्य—(कुप्.लोट्. म.ए) । समुत्पन्न-स्नेहबहुमानाः—सञ्जातप्रीतिगौरवाः । चन्द्रश्रियं—चन्द्रगुप्तस्य राज्य-लक्ष्मीम् । अपरक्तान् द्वेषिणः । उपक्षिप्तं-सूचितम् । नियोगः-कार्यम् । पर्वतेश्वरः—मलयकेतोः पिता ॥

ननु वक्तव्यम्— । चन्द्रगुप्तद्वेषिणः सजीवाः न तिष्ठेयुः इति भावः । क्षपणकः — बौद्धभिक्षुः— भिक्षुवेषे वर्तमानः चाणक्यगुप्तचरः इन्दुशर्मा नाम ब्राह्मणः ।

कायस्थः— लिपिकारः । लघ्वीमात्रा—तृणप्रायः, न गण्यः । कलत्रं—पत्नीं—भार्याम् । पुष्पपुरं—पाटलिपुत्रम् । अवज्ञातुं—तिरस्कर्तुम् । छद्मना—व्याजेन । अपक्रान्तः—निर्गतः । अवगम्यते—ज्ञायते । अवगतार्थं—अवगतः अर्थः येन, तम् । अङ्गुलिप्रणयी-हस्तगतः इति तात्पर्यम् । अधिगमः-प्राप्तिः । परस्य-शत्रोः । अनाः—शङ्कनीयेन-संशयायोग्येन । यमपटेनेत्यन्वयः । यमपटकारणात् अपरिचितस्यापि गृहप्रवेशः सन्देहं नोत्पादयतीति भावः । आहिण्डमानः —परिभ्रमन् । प्रविष्टः—प्र+विश् भूतकर्मणिकृदन्तः । अपवरकात् — प्रकोष्ठात् । उत्फुल्लनयनः — विकसितलोचनः । उत्फुल्ले नयने यस्य सः ॥ शङ्कापरिग्रहनिवेदयिता—सन्देहयुक्तत्वसू-चकः । उत्थितः उदभूत् । उत्+स्था भूतकर्तरिकृदन्तः । निर्भर्त्स्य—तर्जयित्वा । ल्यबन्ताव्ययमिदम् । अवलम्बितः—गृहीतः । संरोधः—निरोधः । संभ्रमः—व्याकुलः । परिणाहः—परिधिः+विस्तारः । विगलिता—स्खलिता—भ्रष्टा । देहली—द्वारपीठी । अनवबुध्यमाना—अविज्ञाता । प्रणामनिभृता-प्रणामे निश्चला—स्थिरा । अनभिव्यक्तं—अस्पष्टम् । श्रोत्रियाक्षराणि—

श्रोत्रं वेदमधीते इति श्रोत्रियः । श्रोत्रियाणां अक्षराणि । अ
बाह्यनामानं – यस्मै लेखः प्रेष्यते तस्य नाम्ना रहितम् । उपतिष्ठस्व
समीपमागच्छ । आस्तां—आस् लोट् प्र.ए. । आख्येयं-वक्तव्य

जितो मलयकेतुः — मलयकेतुः पर्वतकस्य पुत्रः । तेन सह मैत्रीं कृत्वा रा
पाटलीपुत्रं अभियोक्तुमिच्छति । चित्रवर्मा, सिंहनादः, पुष्करा
सिन्धुषेणः, मेघः इति पञ्च राजानः मलयकेतोः विश्वासयो
सुहृदः । शकटदासहस्तेन लेखितेन पत्रेण एते राजानः विश्व
घातिनः इति मत्वा, स्वयं मलयकेतुः तान् घातयति । अनेने
येन चाणक्यः अनायासेन मलयकेतुं निग्रहीष्यति । अत
चाणक्यस्यायमुद्गारः ‘जितो मलयकेतुः’ इति ।

सनिकारं—सापमानम् । निर्वास्यतां–निष्कास्यताम् । अभिद्रो
कुतन्त्रेण मारयितुम् । अभि+द्रुह् तुमुन्नन्ताव्ययम् । आरोप्य
रुह् णिजन्तं, कर्मणिलोट् प्र. ए । मणिकारः-रत्नविक्रेता ।

(श्लोकः 11) अकरुणेन चाणक्येन शब्दायितस्यापि जनस्य निर्दोष
सहसा शङ्का (जायते) । किं पुनः जातदोषस्य मम ॥

शब्दायितस्य–आहूतस्य । लोकस्य–जनस्य । शङ्का–भीतिः । जातदोष
जातः दोषः यस्य, तस्य । अपराधिनः–(राक्षसपुत्रकलत्ररक्षण
मपराधं कृतवतः मम कियती भीतिः भवेत् ? इत्यर्थः ।)

निजनिवेशः — स्वनिवासः । चाणक्यहतकः–धूर्तचाणक्यः इति तुच्छ
विचिनोति अन्वेषणं करोति । अवहिताः–सावधानाः । अप्र
निर्वहत–कार्यं कुरुत । आस्यतां–उपविश्यताम् । आस्
लोट् । परिभवादपि--अनादरादपि । उपक्षिप्त-सूचित
संव्यवहाराणां--निष्कपटवाणिज्यानाम् । वृद्धिलाभः--अर्थला

अपि प्रचीयन्ते--वृद्धिं गच्छन्ति किम्? प्र+चि. कर्तरि लट्। अखण्डिता--निरन्तरा। अविच्छिन्ना निर्विघ्ना। अतिक्रान्तपार्थिवगुणान् गतराजानां सद्गुणान्। अर्थात् नन्दादीनां सद्गुणान्। पिधाय। अपि+धा+ल्यप्। अत्र अपिइत्युपसर्गस्य अकारलोपः। अतिक्रान्ताः—गताः।

शारदनिशा—शरत्कालीना रात्रिः। अर्थजातं—धनराशिः। अर्थे रुचिः यस्य सः तस्य, धनलुब्धस्य। (नन्दानां धनसञ्चयः एकोनशतकोटि सुवर्णनाणकमितः इति इतिहासविदः) अपरिक्लेशः—हितं, कुशलम्।

अविरुद्धाभिः वृत्तिभिः—अनुकूलवर्तनैः। अधन्यपापः। नृणानां अग्निना सह—अवहीनबलाः अतिबलैस्सह कथं विरोधं कर्तुं प्रभवन्ति? इति भावः। राजापथ्यकारिणः—राज्ञे अहितकारिणः, शत्रुपक्षे वर्तमानस्येति यावत्।

अनार्येण—असंस्कृतेन। आशङ्कया—भीत्या। पूर्वराजपुरुषाः—पूर्वस्थितस्य राज्ञः अधिकारिणः। प्रच्छादनं—गूहनं—गोपनम्। दोषं—अपराधं। वाक्छलं—विरोधोक्तिः। केवलं उक्तौ विरोधः न तु परमार्थतः इति चन्दनदासस्याशयः।

परिग्रहःछलानां—न कपटभावानां स्वीकारः। कापट्यं न सहते इत्यर्थः

च्छलं भवतु भवतः—कापट्येन मुक्तो भव। फणी—सर्पः प्रतिकारः—परिहारोपायः। मैवं मंस्थाः—मा एवं चिन्तय। मन्-लुङ् म. ए. 'न माङ्योगे' इति अडागमाभावः। समुच्छेत्स्यति—उन्मूलयिष्यति॥

(श्लोकः 12) नन्दे जीवति (सति) विक्रान्तैः नयशलिभिः वक्रनासादि
सुसचिवैः मुहुः चलन्ती या श्रीः तदा स्थैर्यं न गमिता, (इदानीं)
कत्वमुपागतां जगत्प्रह्लादयन्तीं तां (श्रियं) चन्द्रात् द्युतिम्
चन्द्रगुप्तनृपतेः पृथक् कर्तुं कः व्यवस्येत् ? ॥

विक्रान्तैः—शूरैः—पराक्रमशालिभिः । नयशालिभिः । राजनी
निपुणैः ।

मुहुः चलन्ती या श्रीः—या राज्यश्रीः पुनः पुनः अस्थिरा आसी
स्थैर्यं—स्थिरस्य भावः ! एकत्वमुपागतां—एकीभूताम् । द्युतिः
कान्तिः—प्रभा । पृथक्कर्तुं—वियोक्तुम् । (अव्ययम्)

व्यवस्येत्—वि+अव+सो, विधिलिङ् प्र. ए । इदानीं चन्द्रगुप्तराज्य
स्थिरतां नीता । चन्द्रात् कान्ति पृथक् कर्तुं यथा असा
तथा चाणक्ये जीवति सति चन्द्रगुप्तात् राज्यश्रियं वियोक्तुं
शक्यते इति भावः ।

अत्र उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥

पथ्यं— हितम् ।

समर्प्यतां राक्षसगृहजनः । राक्षसगृहजनं समर्पय इति प्रयोगान्तरम् ।

अनुभूयन्तां—अनु+भू कर्मणि लोट् प्र. ब.

(श्लोकः 13) परसंवेदने (सति) सुलभेषु अर्थलाभेषु सत्सु जाने (—
इदं दुष्करं कर्म शिबिना विना इदानीं (कः अन्यः) कुर्यात् ?

परसंवेदने—परकीयस्यार्थस्य समर्पणे कृते सति । अर्थलाभेषु—स्वस्य
लाभेषु सत्सु) इदं दुष्करम् स्वार्थं तृणीकृत्य, परसंरक्षणरूपं
दुष्करं कर्मेत्यर्थः ।





शिबिः इति त्यागशीलः कश्चिद्राजा । शिबिरयं कृतयुगे त्यागं कृतवान्, त्वं तु इदानीं पापिनि कलौ युगे करोषीति ततोऽपि अतिशयितसुचरितः त्वं इतिभावः ॥

गृहसारं—गृहसम्पदं । संयम्य—बध्वा । पुरुषदोषेण—आत्मदोषेण ॥

(श्लोकः 14) यथा अयं (स्व,प्राणान् अप्रियवत् त्यजति, तस्य (राक्षसस्य) आपदि, तथैव अस्य (चन्दनदासस्य) आपदि तस्य (राक्षसस्य) अपि प्राणा नूनं न प्रियाः ।

अप्रियवत्—अनिष्टवस्तुवत् । अत्र अनष्टुप्छन्दः ।

विभाव्य—सम्यक् विज्ञाय—अपक्रान्तः—गूढं पलायितः । संभावय—निगृह्य आनय । त्वमपि तेन सह गत्वा कार्यं साधयेति अन्तरर्थः ।

(श्लोकः 15) किमपि हृदये प्रधार्य पूर्वं याताः ये, ते गता एव । ये तिष्ठन्ति तेऽपि गमने कामं प्रकामोद्यता भवन्तु । अर्थसाधनविधौ सेनाशतेभ्योऽधिका नन्दोन्मूलनदृष्टवीर्यमहिमा एका केवलं मम बुद्धिस्तु मा गात् ॥

हृदये प्रधार्य—मनसिकृत्वा । याताः—गताः । या धातोः भूतकर्मणिकृदन्तः । प्रकामोद्यमाः—विपुलप्रयत्ने रताः । कामं यथेष्टम् । गमने भवन्तु—अस्मत्पक्षं विहाय स्वाभिलषितसाधनाय (वस्तुतः अस्मदभिलषितसाधनाय) गच्छन्तु । अर्थसाधनविधौ—स्वोद्दिष्टराजतन्त्रसम्पादनकर्मणि ।

मम बुद्धिः, मा गात्—नीतिमार्गात् मां विहाय शत्रून् न कदाऽपि गच्छतु इति भावः । 'मा गात्' इत्यत्र 'न माङ्योगे' इति सूत्रेण अकाराभावः । इदं च वाक्यं चाणक्यस्य आत्मविश्वासं द्योतयति । शार्दूलविक्रीडितं च वृत्तम् ॥

(श्लोकः—16) स्वच्छन्दं एकचरं उज्ज्वलदानशक्ति उत्सेकिना बलमदे
विगाहमानं आरण्यकं गजमिव (वर्तमानं) भवन्तं वृषलस्य कृते (म
बुद्ध्या निगृह्य प्रगुणीकरोमि ॥

अत्र प्रयुक्तानि विशेषणानि गजराक्षसयोः समानानि ।

तत्र राक्षसपक्षे—

स्वच्छन्दं—(राजतन्त्रविषये) स्वेच्छावर्तिनं, एकचरं—स्वजना
विहाय एकमेव चरन्तम् । उज्ज्वलदानशक्ति-अपेक्षितवते बहु
दानं कर्तुं शक्तम् । (चन्द्रगुप्तोत्सादनाय आप्तवर्गस्य कृते बहुध
व्ययसमर्थं इति वा । उत्सेकिना बलमदेन विगाहमानं—प्रवर्त
मानेन सैन्यादिसञ्चयाभिमानेन चन्द्रगुप्तापकाराय चेष्टमानमित्यर्थः
उत्सेकः—गर्वः ॥

गजपक्षे—स्वच्छन्दमेकचरं—निर्भयेन वने यथेच्छं सञ्चरन्तं, उज्वलदान
शक्तिं मदजलं स्रवितुं बहुशक्तिमन्तं, उत्सेकिना बलमदेन विगाह
मानं—भृशमुद्रिक्तेन स्वशक्तिमदेन च इतस्ततः सञ्चरन्
इत्यर्थः ।

भवन्तं प्रगुणीकरोमि—बध्नामि—वशीकरोमि । अत्र उपमालङ्कारः
वसन्ततिलकावृत्तम् । यथा स्वमतेन बलेन च यथेष्टमरण्ये सञ्चरन्
गजं गृहीत्वा हस्तिविद्यानिपुणः गजपतनादिना वशीकृत्य उपयुक्त
कार्येषु नियोजयति । तथा स्वतीक्ष्णमत्या राक्षसं विजित्य, स
चन्द्रगुप्ते साचिव्यरूपां सेवां कर्तुं यथा प्रभवेत्, तथा करो
इति भावः ॥

———

## अभ्यासः

**(I) एकवाक्येन उत्तरं लिखत—**

१ मुद्राराक्षसनाटकस्य कर्ता कः ?
२ 'अङ्गुलिमुद्राधिगमः' इत्ययं भागः कस्मात् ग्रन्थात् उद्धृतः ?
३ चाणक्यस्य अपरं नाम किम् ?
४ ऐश्वर्ययुक्तं स्वामिनं लोकः किमर्थं सेवते ?
५ यमस्य चरणवेव किमर्थं प्रणम्यौ ?
६ यमपटः केन प्रदर्शितः ?
७ निपुणकः किं कार्यमुद्दिश्य नियुक्तः आसीत् ?
८ चन्द्रगुप्ते अपरक्तानां त्रयाणां पुरुषाणां नामानि लिखत ।
९ क्षपणकस्य निजनाम किम् ?
१० शकटदासः कः ?
११ कः अमात्यराक्षसस्य द्वितीयंहृदयमिवासीत् ?
१२ अङ्गुलिमुद्रायां कस्य नाम लिखितमासीत् ?
१३ अपराधिने क्षपणकाय आदिष्टः दण्डः कः ?
१४ अपराधिने शकटदासाय कः दण्डः आदिष्टः ?
१५ चन्दनदासस्य वृत्तिः का आसीत् ?
१६ चाणक्यस्य अभिप्राये चन्दनदासेन कः अपराधः कृतः ?
१७ कस्य विषये राजा तीक्ष्णदण्डः ?
१८ राजापथ्यकारिणे चन्दनदासाय कः दण्डः विहितः ?
१९ विशाखदत्तः कस्य पुत्रः ?

**(II) ससन्दर्भं अर्थं विशदयत—**

१ न शालेः स्तम्बकरिता वप्तुः गुणमपेक्षते ।

२ को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ।

३ न पुनरुपाध्यायसहभूः शिष्यजने दुःशीलता ।

४ वृषलापेक्षया शस्त्रं धारयामि ।

५ अगृहिते राक्षसे किमुत्खातं नन्दवंशस्य ।

६ ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते ।

७ किं कार्यं दैवैरन्यैः ?

८ नहि सर्वः सर्वं जानाति ।

९ ननु वक्तव्यं 'स्वजीवितं च न सहन्ते' इति ।

१० राक्षस एव अस्मदङ्गुलिप्रणयीसंवृत्तः ।

११ प्रणामनिभृता नववधूरिव निश्चला संवृत्तः ।

१२ श्रोत्रियाक्षराणि प्रयत्नेन लिखितान्यपि नियतं अस्फुट भवन्ति ।

१३ किं पुनर्मम जातदोषस्य ।

१४ अनुचितः उपचारः परिभवादपि महद्दुःखं उत्पादयति ।

१५ अत्यादरः शङ्कनीयः ।

१६ कीदृशः तृणानां अग्निना सह विरोधः ?

१७ चन्द्रगुप्ते राजनि न परिग्रहः छलानाम् ।

१८ शिरसि फणी दूरे तत्प्रतीकारः ।

१९ क इदं दुष्करं कुर्यादिदानीं शिबिना विना ।

२० प्राणाः नूनं तस्यापि न प्रियाः ।

२१ बुद्धिस्तु मा गान्मम ।

२२ आरण्यकं गजमिव प्रगुणीकरोमि ॥

(III) प्रबन्धरूपाः प्रश्नाः—

(अ) १ चाणक्यस्य राजतन्त्रनैपुण्यं विशदयत ।

२ 'अङ्गुलिमुद्राधिगमः' इति शीर्षिकां समर्थयत ।

३ चाणक्यचन्दनदासयोः संभाषणस्य सारांशं संक्षेपेण विलिख्य यथारुचि विमृशत ।

४ चाणक्यस्य पात्रपरिचयं कुरुत ।

५ चाणक्यनिपुणकयोः संभाषणं विलिख्य तस्य महत्त्वं विशदयत ।

६ चन्दनदासस्य पात्रं परिचाययत ।

७ विशाखदत्तस्य देश-काल-ग्रन्थादिकं अधिकृत्य प्रबन्धं लिखत ।

८ 'अङ्गुलिमुद्राधिगमः' इतिपाठस्य विमर्शात्मकं प्रबन्धं रचयत ।

(आ) लघुटिप्पणीः आरचयत—

१ नान्दी, २ प्रस्तावना

३ अङ्गुलिमुद्रावृत्तान्तः, ४ क्षपणकशकटदासौ

५ राक्षसः ६ चन्दनदासः

७ चाणक्यस्य बुद्धिकौशलम्

८ विशाखदत्तः ९ यमपटः

(इ) भाषान्तरं कृत्वा तात्पर्यं विवृणुत—

श्लोकसंख्या :– १, ५, ६, ८, ९, १२, १५, १६

(IV) (अ) सन्धिं विभज्य सन्धिनामानि लिखत—

नेन्दुं, केयं, यदिन्दुः, द्विषदभियोगः, इत्यवैति, लोकोऽर्थतः, पुनस्ते, तस्माद्देहि, आत्मीयस्यैव, भूमावुप-

विशति, सन्त्यत्र, शृणोत्वार्यः, तस्यैव, मैवं, अस्
ज्जनात्, अन्यच्च ॥

(आ) विग्रहवाक्यानि कुरुत—

सत्क्षेत्रपतिता, सकेतुः, पूर्णमण्डलं, कुटिलमतिः, क्रोधा
शशलाञ्छनस्य, धूमलतां, सहभूः, यथाशक्ति, धर्मवित्
बद्धपक्षपातः, अवगतार्थं, उत्फुल्लनयनः, जातदोष
देशान्तरम् ॥

(V) व्याकरणरीत्या पदपरिचयं कुरुत—

विस्मृतं, नाटयितव्यम्, गत्वा, आहूय, परिक्र
प्रविश्य, अभिभवितुं, ज्ञातं, प्रसभं, मुक्तां परामृश
हर्तुं स्फुरन्तीं, बध्यमानां, वध्यः, उपवेष्टुं, निस्ती
विचिन्त्य, इदानीं, विभक्तं, कार्यं दर्शयन्, विह
नियुक्तः, वक्तव्यं, ओाहिण्डमानः, प्रविष्टः प्रवृ
उत्थितः, जेतव्यः, द्रष्टुं, सहसा, शङ्कनीयः, निक्षि
लब्धः ॥

(VI) प्रयोगं प्रवर्तयत—

१ आज्ञापितोऽस्मि परिषदा ।
२ कः चन्द्रमभिभवितुमिच्छति ।
३ रक्षत्येनं तु बुधयोगः ।
४ न मयाऽपि अस्मिन्विषये शयानेन स्थीयते ।
५ एष खलु अन्यभक्तानां जीवं हरति ।
६ तस्मात् देहि मे प्रवेशम् ।
७ धर्ममुपदिशमि ।

८ न हि सर्वः सर्वं जानाति ।

९ उपवर्णय स्वनियोगवृत्तान्तम् ।

१० कथमवगम्यते भवता ?

११ मसीभाजनं पत्रं च उपानय ।

१२ समर्प्यतां राक्षसगृहजनः

१३ अनुभूयतां तर्हि राजकोपः ।

१४ ज्ञायतां किमेतत् ।

(VII) यथानिर्देशं विभक्तिवचनानि लिखत—

अस्मान्, पौरेषु, सरसि, मनसा, विपत्तिषु, अपेक्षया, भर्तुः, भक्तया, कुतिनः, वस्तुनि चरणौ, प्रकृतयः, छद्म, भवता, गीतानि, एकया, हृदयस्य, आत्मनः, कलत्रम्, भवन्तम् ॥

VIII लकारपुरुषवचनानि लिखत—

पृच्छामि, चीयते, प्रविशामि उपेहि, अस्मि अनुगृह्णातु पश्य, अदाहि, गच्छावः, कथय, अज्ञापयतु, वहन्ति, स्यात्, क्रियते, प्रणमत, गायामि, कुप्य, जानन्ति, सन्ति, शृणोतु, आधिगमिष्यसि, निर्वहत, रक्षसि, व्यवस्येत्, रक्ष, कुर्यात्, तिष्ठतु यास्यसि ॥

(IX) यथानिर्देश कुरत -

१ धन्या का इयम् ? (सर्वत्रपुंलिङ्गरूपं लिखत)

२ आवां गच्छावः (सर्वत्र एकवचनरूपं लिखत)

३ कोपः प्रीतिः अस्माकम् (सर्वत्र द्विवचनं लिखत)

४ प्रणमत यमस्य चरणौ (उत्तमपुरुषक्रियापदं लिखत)

(X) अत्रत्यमलङ्कारं लिखत—

श्लोकाः २, ६, ७ ८. १२, १६

(XI) सप्रस्तारं वृत्तं निर्दिशत—

श्लोकाः—१, ८, ९, १२, १४, १६

(XI) दोषान् परिहरत—

१ अलं अतिप्रसङ्गः ।

२ गृहजनस्य सह सङ्गीतकमनुतिष्ठामि ।

(XIII) कक्ष्याभ्यासः—

१ इदं नाटकं सरलसंस्कृतगद्ये लिखत ।

२ चाणाक्यचन्दनदासयोः संभाषणं अभिनयत ।

३ अस्मिन् नाटके वर्तमानानि लट्रूपाणि सङ्गृह्य, लिट् रूपाणि लिखत ॥

———

# " अप्रस्तुतावेगः "

(वेणीसंहारस्य तृतियोऽङ्कः)

॥ पीठिका ॥

वेणीसंहारनाटकस्य कर्ता भट्टनारायणः। एतत्प्रस्तावनायां हि— "तदिदं कवेर्मृगराजलक्ष्मणो भट्टनारायणस्य" इत्युक्तिः दृश्यते। अनया अस्य भट्टनारायणस्य 'मृगराजः' (सिंहः) इति उपनाम आसीदिति ज्ञायते।

शाण्डिल्यगोत्रीयोऽयं भट्टनारायणः कान्यकुब्जीयब्राह्मणः आसीत्। सेनवंशस्थापकस्य आदिशूरस्य आह्वान स्वीकृत्य सः वङ्गदेशं प्राप्तवान् इति 'क्षितीशवंशावलीचरित' नामकग्रन्थात् ज्ञायते।

सेनवंशस्थापकः आदिशूरः क्रि. श. ६५० समये राज्यं पालयति स्म। ह्यूयन्त्साङ्गस्य प्रवासकथने-अंशुवर्मणो नेपालनृपस्य भगिनी शूरसेनाय दत्तेति असौ शूरसेनएव आदिशूरः इति च भाव्यते। अंशुवर्मा क्रि. श. ६४४-६७२ समये शास्ति स्म। अत· अयमादिशूरः सप्तम-शतमाने आसीदिति वक्तुं शक्यम्। यतः आदिशूरः भट्टनारायणं आहूतवान्। तस्मात् भट्टनारायणः सप्तमशतमानस्य पूर्वार्धे जीवति स्मेति वक्तुं शक्यते।

ओजोगुणविषये भवभूतेः भट्टनारायणस्य च साम्यं दृश्यते। भवभूतेः कालस्तु क्रि. श. ६७७-७२५ इति निश्चितः। अतः भट्टनारायणः भवभूतेः किञ्चित्पूर्वं सप्तमशतमानस्यादिभागे वर्तते स्म। वामनः, आनन्दवर्धनः, कुन्तकः, धनञ्जयः, भोजराजः, क्षेमेन्द्रः,

मम्मट:, विश्वनाथ:, इत्येते काव्यविमर्शकाः (अलङ्कारशास्त्रज्ञा: ।
ग्रन्थेषु वेणीसंहारतः श्लोकान् सन्दर्भांश्च सगौरवं उद्धरन्ति । एषु प्राच्
तमः वामनाचार्यः क्रि. श. ७५० समये आसीत् । अनेन भट्टनारा
वामनाचार्यात् पूर्वं प्रायः सप्तमशतकस्यादिभागे आसीदिति ।
शक्यते ॥

वेणीसंहारमेकमेव भट्टनारायणस्य कृतिरत्नम् । नाटकेऽ
षडङ्काः भवन्ति । भीमेन द्रौपदीवेण्याः संयमनं अत्र कौरवपाण्डवयो
कथाभित्तौ समर्थतया दृश्यमाध्यमेन निरूपितम्

कथासरण्यां मूलमहाभारतस्य अस्य वेणीसंहारस्य च केचन भे
दृश्यन्ते । यथा भीमेन सुयोधनस्योरुशोणितेन द्रौपदीकेशसंयमनं, भानु
प्रसङ्गः, अश्वत्थाम्ना क्रोधेन यज्ञोपवीतच्छेदनम्, सुन्दरकेण युद्धव
चार्वाकप्रसङ्गः, इत्यादयः । एते चस्य नाटकस्य संविधाने चमत्का
सन्ति ।

वेणीसंहारस्य षट्सु अङ्केषु तृतीयाङ्कः श्रेष्ठ· इति परिगणि
अश्वत्थाम्नो व्यक्तित्वस्य विविधमुखानि प्रभावपूर्णतया अत्र चित्रिता
अत एव एषः अश्वत्थामाङ्कः इत्येव प्रसिद्धः । अश्वत्थाम्नः पितृवात्स
तस्य वीरावेशः, कर्णाश्वत्थाम्नोः वाग्युद्धम्, अश्वत्थाम्नः अस्त्रत्यागवि
विधेःप्राबल्म् च अत्र चारुतया प्रपञ्चितम् । अत्र च अश्वत्थामा क
प्रस्तुतं त्यक्त्वा अप्रस्तुतविषये उद्विग्नौ भवतः । अतः तृतीयाङ्कस्य
'अप्रस्तुतावेगः' इत्येवास्माभिः शीर्षिका दत्ता ।

अत्र च प्रथमं प्रवेशके राक्षसदम्पत्योः प्रेमसिञ्चितसंव
जयद्रथघटोत्कचाभिमन्युप्रभृतीनां मरणं, धृष्टद्युम्नेन साधितं द्रोणमरण
व्याह्रियते । ततः स्वपितुः द्रोणस्य पराक्रमातिशयं वर्णयन् प्रविष्टो

त्थामा द्रोणस्य सारथिनाऽश्वसेनेन वर्णितं द्रोणमरणवृत्तान्तं शृणोति। युधिष्ठिरस्य मिथ्यावचसा सुतशोकातुरः द्रोणः धृष्टद्युम्नेनावमानितः मारितश्चेति ज्ञात्वा अतीव दुःखितः सन् द्रोणमरणोपेक्षिणां दिग्बलिं दास्ये इति उद्घोषयति। कृपेण समाश्वासितः सेनापतित्वस्वीकरणाय प्रचोदितश्च सः दुर्योधनमभिगच्छति। कर्णः द्रोणे भीरुत्वारोपणं कृत्वा अश्वत्थामानं अधिक्षिपति। संरब्धः अश्वत्थामा कर्णवधं यावत् शस्त्रं न स्पृशामि इति खड्गं त्यजति।

एवं कर्णाश्वत्थाम्नोः वाग्युद्धं खड्गयुद्धे परिणम्य अश्वत्थाम्नो खड्गत्यागे हेतुर्भवति। कृपदुर्योधनयोः सान्त्वयतोः 'मद्भुजपञ्जरे निपतितः दुश्शासनः संरक्ष्यतां' इति भीमगर्जनं श्रुत्वा, पूर्वं त्यक्तमप्यायुधं पुनर्ग्रहीतुमिच्छति। किं तु अशरीरवाण्या सः वार्यते। कर्णदुर्योधनौ भीमात् दुःशासनं त्रातुं परिधावतः।

नाटकेऽस्मिन् भट्टनारायणस्य शैली वीररसपोषिणी गौडीया। "ओजःकान्तिमती गौडीया" इति हि तल्लक्षणम्, भट्टनारायणोऽयं वृत्तालङ्कारयोः समुचितं संयोजनं कृतवान् अत्र।

वामनाचार्यादिकाव्यविमर्शकैः (आलङ्कारिकैः) उल्लिखितायाः ओजोगुणयुतायाः प्रसन्नायाः भट्टनारायणस्य शैल्याः प्रभावः पश्चात्तनसाहित्ये बाढं दृश्यत एव। एष च प्रभावः विशेषतश्च कर्णाटकभाषासाहित्ये महाकव्योः पम्परन्नयोः कृत्योः विक्रमार्जुनविजय—गदायुद्धयोः दरीदृश्यते॥

## पात्रपरिचयः

पुरुषपात्राणि—

(१) राक्षसः = रुधिरप्रियः

(२) अश्वत्थामा = द्रोणस्य पुत्रः

(३) कृपः = अश्वत्थाम्नः मातुलः

(४) सूतः = द्रोणस्य सारथिः अश्वसेनः

(५) दुर्योधनः = कौरवाणां राजा

(६) कर्णः = अङ्गराजः

स्त्रीपात्राणि —

(१) राक्षसी = वसागन्धा = रुधिरप्रियस्य पत्नी ॥

उल्लिखितपात्रणि —

(१) द्रोणः = अश्वत्थाम्नः पिता

(२) युधिष्ठिरः = पञ्चपाण्डवेषु ज्येष्ठः

(३) धृष्टद्युम्नः = द्रुपदस्य पुत्रः

———

# अप्रस्तुतावेगः

## वेणीसंहारस्य तृतीयोऽङ्कः

(ततः प्रविशति विकृतवेषा राक्षसी)

राक्षसी—(विकृतं विहस्य, सपरितोषम् )

हतमानुषमांसभोजने
कुम्भसहस्रं वसाभिः सञ्चितम् ।
अनिशं च पिबामि शोणितं
वर्षशतं समरो भवतु ॥ Let there be war for 100 years.

[इदमानुश मंश भोअणे
कुंभशहश्शं वशाहिं शंचिए ।
अणिशं अ पिबामि शं णिअं
वलिशशदं शमले हुवीअदु ॥]

(नृत्यन्ती सपरितोषम् )

यदि सिन्धुराजवधदिवसे इव दिवसे दिवसे समरकर्म प्रतिपद्यतेऽर्जुनः तदा पर्याप्तभरितकोष्ठागारं मांसशोणितैर्मे गृहं भविष्यति । [जइ शिंधुलाअ वह दिअहे विअ दिअहे दिअहे शमलकम्म पडिवज्जइ अज्जुणे, तदो पज्जत्त भलिदकोट्ठागाले मंशशोणिएहिं मे गेहे हुवी अदि ।]

(परिक्रम्य दिशोऽवलोक्य)

अथ क्व खलु गतः मे रुधिरप्रियो भविष्यति ? भवतु । शब्दायिष्ये तावत् । अये ! रुधिरप्रिय ! इत एहि । [अह कहिं खु

गदे मे लुहिलप्पिए हुविस्सदि। होदु। शद्दावइश्शं
अले लुहिलप्पिआ! इदो एहि।]

(ततः प्रविशति तथाविधो राक्षसः)

राक्षसः—(श्रमं नाटयन्)

प्रत्यग्रहतानां मांसं
यद्युष्णं रुधिरं च लभ्येत।
तदैष मम परिश्रमः
क्षणमात्रमेव लघु नश्येत्॥ २॥

[पच्चग्ग हदाणं मंशए
जइ उण्हे लुहिले अलब्भइ।
ता एशो महपलिश्शमे
क्खवणमेत्तं एव्व लहुणश्शइ॥]

(राक्षसी पुनर्व्याहरति)

राक्षसः—(आकर्ण्य) अरे कैषा मां शब्दायते? [अले के एशे
शद्दावेदि!] (विलोक्य) कथं प्रिया मे वसागन्धा! [कहं
मे वशागंधा!] (उपसृत्य) वसागन्धे! कस्मान्मां शब्दाय
[वशागन्धे! कीश मं शद्दावेशि?]

राक्षसी—अरे रुधिरप्रिय। इदं खलु मया तव कारणात् प्रत्यग्र
कस्यापि राजर्षेः नवरुधिरं अग्रमांसं च आनीतम्। तत् पिब
[अले लुहिलप्पिआ! एदं खु मए तुह कालणादो पच्चग्गह
लाएशिणो णवलुहिलं अग्गमंशं अ आणीदं। ता पिवाहि

राक्षसः—(सपरितोषम्) वसागन्धे! सुष्ठु। शोभनं त्वया कृ

बलवदस्मि पिपासितः। तदुपनय। [वशागंधे! शुट्ठु! शंहणं तुए किंद। बलिअम्हि पिवाशिए। ता उवणेहि।]

राक्षसी—अरे रुधिरप्रिय! ईदृशेऽपि नाम हतनरगजतुरङ्गमशोणितवसा-समुद्रदुःसञ्चरे समरे परिभ्रमन् त्वं पिपासितोऽसीत्याश्चर्यम्! [अले! लुहिल प्पिआ! एदिशे वि णाम हदणलगअ तुलंगम शोणिअवशाशमुद्ददुश्शंचले शमले पडिब्भमंते तुमं पिवशिएशित्ति अच्चलिअं अच्चलिअं।]

राक्षसः—अयि सुस्थिते! ननु पुत्रशोकसंतप्तहृदयां स्वामिनीं हिडिम्बादेवीं प्रेक्षितुं गतोऽस्मि। [अइ शुत्थिदे! णं पुत्तशोअ शंतत्त हिअअं शामिणीं हिडिंबादेवीं पेक्खिदु गदम्हि।]

राक्षसी—रुधिरप्रिय! अद्यापि स्वामिन्याः हिडिम्बादेव्याः घटोत्कचशोकः नोपशाम्यति? [लुहिलप्पिआ! अज्जा वि शामिणीए हिडिंबादेवीए घडुक्कअसोए ण उवशमइ?]

राक्षसः—वसागन्धे! कुतोऽस्याः उपशमः? केवलं अभिमन्युशोकसमान-दुःखया सुभद्रादेव्या याज्ञसेन्या च कथंकथमपि समाश्वास्यते। [वशागंधे! कुदो शे उवशमे? केवलं अहिमण्णु शोआ शमाण-दुक्खाए शुभद्दादेवीए जण्णुशेणीए आ कधं कधं विशमश्शा-शीअदि।]

राक्षसी—रुधिरप्रिय! गृहाणैतत् हस्तिशिरःकपालसञ्चितं अग्रमांसो-पदंशम्। पिव शोणितासवम्। [लुहिलप्पिआ! गेण्ह एदं हत्थि शिलक्कवाल शंचिअं अग्ग मंशोवदंशं। पिवाहि शोणि-आशवं।]

How much by you collect

राक्षसः—(तथा कृत्वा) वसागन्धे अथ कियत्प्रभूतं त्वया सञ्चितं अग्रमांसं च ? [वशागंधे ! अह किअप्पहूदं तुए शंचिअं अग्गमंशं अ ?]

you

राक्षसी—अरे ! रुधिरप्रिय ! पूर्वसञ्चितं त्वमपि जानास्येव । सञ्चितं शृणु तावत् । भगदत्तशोणितैः कुम्भः सिन्धुराजवसा कुम्भौ द्वौ द्रुपदमत्स्याधिप—भूरिश्रवःसोमदत्तबाल्हीकप्रमुख नरेन्द्राणां अन्येषामपि प्राकृतपुरुषाणां रुधिरमांसैः पूरि घटशतान्यसंख्यानि सन्ति मे गेहे । [अले लुहिलप्पिआ ! शंचिअं तुमं वि जाणाशि जेव्व । णवशंचिअं शिणुदा भअदत्त शोणिएह कुम्भे शिन्धुलाअ वशाहिं कुंभे दुवे दुवदमच्छ हिवमूलिश्शवशोमदत्त वल्ही अप्प-मुहाणं णलिन्दाणं अण्ण पाकिदपुलिशाणं लुहिलमंशेहिं पुलिदाइं घडशदाइं अशंक्खाइं श मह गेहे ।]

of kings — ordinary soldiers

राक्षसः—साधु सुगृहिणि ! साधु । अनेन ते सुगृहिणीत्वेन अद्य स्वामिन्याः हिडिम्बादेव्याः संविधानेन प्रनष्टं मे जन्मदारिद्र्य [शाहु शुग्गलिणीए ! शाहु ! इमिगा दे शुग्घलिणित्त ओज्जउण शामिणीए हिडिंबादेवीए शंविहाणेण प्पणट्ठं जम्मदालिद्द ।]

Pov.

राक्षसी --रुधिरप्रिय ! कीदृशं स्वामिन्या संविधानं कृतम् ? [लुहिलप्पिअ केलिशे शामिणीए शंविहाणए किदे ?]

राक्षसः—वसागन्धे ! आज्ञप्तः खलु स्वामिन्या हिडिम्बादेव्या-य रुधिरप्रिय ! अद्यप्रभृति त्वया आर्यपुत्रभीमसेनस्य पृष्ठतोऽनुपृष्ठं आहिण्डितव्यमिति । तत्तस्यानुमार्गगामिनः हतमानुषशोणि नदीदर्शनप्रनष्टबुभुक्षापिपासस्येहैव मे स्वर्गलोको भविष्यति

त्वमपि विस्रब्धा भूत्वा रुधिरवसाभिः कुम्भसहस्रं संचिनु [वशागंधे। आणत्ते क्खु हगे शामिणीए हिडिंबादेवीए जह लुहिलप्पिआ! अज्जपहुदि तुए अज्जउत्तभीमशेणश्श पिट्ठदे ऽणुपिट्ठं शमले आहिंडिदव्वं त्ति। ता तश्श अणु सग्गगामिणो हआ माणुशश्शा इहएव्व मह शग्गलोओ हुवीआदि। तुमं वि वि शद्धा भविअ लुहिलवशाहिं कुम्भशहश्शं शंचेहि ॥]

राक्षसी—रुधिरप्रिय! किंनिमित्तं कुमारभीमसेनस्य पृष्ठत आहिण्ड्यते? [लुहिलप्पिआ! किंणिमित्तं कुमालभीमशेणश्श पिट्ठदो अहिंढी अदि?]

राक्षसः—वसागन्धे! तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम्। तच्च अस्माभी राक्षसैः अनुप्रविश्य पातव्यम्। [वशागंधे! तेण हि शामिणा विओदलेन दुश्शाशणश्श लुहिलं पादुं पडिण्णादं। तं अ अह्मेहिं लक्खशेहिं अनुप्पविशिअ पादव्वं।]

राक्षसी—(सहर्षं) साधु स्वामिनि! साधु सुसंविधानो मे भर्ता कृतः [शाहु शामिणीए शाहु। शुशंविहाणे मे भत्ता किदे।]

(नेपथ्ये महान् कलकलः)

राक्षसी—(आकर्ण्य ससंभ्रमम्) अरे रुधिरप्रिय! किं नु खल्वेष महान् कलकलः श्रूयते? [अले लुहिलप्पिआ! किं णु क्खु एशे महंते कलअले शुणीअदि?)

राक्षसः—(दृष्ट्वा) वसागन्धे! एष खलु धृष्टद्युम्नेन द्रोणः केशेष्वाकृष्य असिपत्रेण व्यापाद्यते। [वशागंधे! एशेक्खु धिट्ठज्जुण्णेण दोणे केशेशु आकड्ढिअ अशिवत्तेण व्वावादी अदि।]

राक्षसी —(सहर्षं) रुधिरप्रिय ! एहि, गत्वा द्रोणस्य रुधिरं पिबा[illegible] अये
[लुहिलप्पिआ ! एहि, गच्छिअ दोणाश्श लुहिरुं पिवह्म ।]

(नेपथ्ये पुनः कलकलः)

राक्षसी —रुधिरप्रिय ! पुनरप्येष महान् कलकलः श्रूयते ! [लुहिलपि[illegible] हा
पुणं वि एशे महंते कलकले शुणीणीादि]

राक्षसः—(नेपथ्याभिमुखमवलोक्य) वसागन्धे एष खलु अश्वत्थामाकृष्टासि[illegible]
इत एवागच्छति । कदाचित् द्रुपदसुतरोषेण आवामपि व्यापाद[illegible]
ष्यति । तदेहि । अतिक्रामावः । [वशागंधे ! एशे
अश्शत्थामे आकड्ढिदाशि वत्ते इदो एव्व आअच्छदि । क[illegible]
दुवदशुद लोशेण अम्हेवि व्वावादइश्शइ । ता [illegible]
अतिक्कमह्व ॥]

(इति निष्क्रान्तौ)

॥ इति प्रवेशकः ॥

(ततः प्रविशत्याकृष्टखड्गः कलकलमाकर्णयन् अश्वत्थामा) अश्व[illegible]

अश्वत्थामा—(विचिन्त्य) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा [illegible]
नदर्पादतिक्रान्तमर्यादेन परिकोपितस्तातः समुल्लङ्घ्य शिष्यप्रि[illegible]
आत्मप्रभावसदृशमाचेष्टते ।

(पृष्ठतो विलोक्य)

तत्कोऽत्र ? रथमपनयतु । अथवा अलमिदानीं मम रथप्रतीक्षया । स[illegible]
एवास्मि ॥ सजलजलधरप्रभाभासुरेण खड्गेन । यावत् [illegible]
भुवं अवतरामि ।

(परिक्रम्य, वामाक्षिस्पन्दनं सूचयित्वा) सूतः

अये ! ममापि नामाश्वत्थाम्नः तातविक्रमदर्शनलालसस्य अनिमित्तानि समरगमनविघ्नमुत्पादयन्ति । भवतु, गच्छामि ।

(निरूप्य)

हा धिक्कष्टम् । कथमेते महारथाः कर्णादयोऽपि समरात् परङ्मुखा भवन्ति ? कथं नु तताधिष्ठितानामपि बलानां इयमवस्था भवेत् ? भो भोः कृतं कृतममुना समरपरित्यागसाहसेन ।

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्व-
धन्वीश्वराणाम् ।
कर्णालं सम्भ्रमेण व्रज कृप ! समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः ॥३॥

(नेपथ्ये)

कुतोऽद्यापि ते तातः ?

अश्वत्थामा—(श्रुत्वा) किं ब्रूथ ? 'कुतोऽद्यापि ते तातः' इति ? (सरोषं) आः क्षुद्राः ! समरभीरवः ! कथमेवं प्रलपतां वः सहस्रधा न दीर्णा अनया जिह्वया ?

दग्धुं विश्वं दहनकिरणैः नोदिताः द्वादशार्काः
वाता वाता दिशिदिशि नवा सप्तधा सप्त भिन्नाः ।
छन्नं मेघैः न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥ ४ ॥

(प्रविश्य संभ्रान्तः सप्रहारः)

सूतः—परित्रायतां परित्रायतां कुमारः । (पादयोः पतति)

अश्व (विलोक्य) अये! कथं तातस्य सारथिः अश्वसेनः। ननु त्रैलोक्यत्राणक्षमस्य सारथिरसि। किं मत्तः परित्राणमिच्छसि

सूतः—(उत्थाय, सकरुणम्) कुतोऽद्यापि ते तातः?

अश्व—(सावेगम्) किं तातो नामास्तमुपगतः? Has his name disappear

सूतः – अथ किम्। Idiom

अश्व—हा तात! (इति मोहमुपगतः)

सूत—कुमार! समाश्वसिहि, समाश्वसिहि। Console yourself

अश्वः—(लब्धसंज्ञः सास्रं) हा तात। हा सुतवत्सल! हा लोकत्रै with tears

archer धनुर्धर! हा जामदग्न्यास्त्रप्रतिग्रहप्रणयिन्! क्वासि? प्र मे प्रतिवचनत्। reply

सूतः—कुमार! अलमत्यन्तशोकावेगेन। वीरपुरुषोचितां विपत्तिमु पितरि त्वमपि तदनुरूपेणैव शोकसागरमुत्तीर्य सुखीभव।

अश्वः—(अश्रूणि विमुच्य) आर्य! कथय कथय, कथं तादृग्भुजवीर्यसा तातोऽपि नामास्तमुपगतः?

सूतः श्रूयताम् (अश्रूणि विमुच्य) Tears

Yudhishthira

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा।
तच्छ्रुत्वाऽसौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच। ॥५

tears

अश्वः—हा तात हा सुतवत्सल! हा वृथामदर्थपरित्यक्तजीवित! शौर्यराशे! हा शिष्यप्रिय! हा युधिष्ठिरपक्षपातिन्! (रोदिति)

सूतः—कुमार ! अलं अत्यन्तपरिदेवनकार्पण्येन ।

अश्वः—श्रुत्वा वधं मम मृषा सुतवत्सलेन
तात ! त्वया सहशरैरसवो विमुक्ताः ।
जीवाम्यहं पुनरहो ! भवता विनाऽपि
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ॥ ६ ॥

(इति मोहमुपगतः)

सूतः—समाश्वसितु कुमारः ।

(ततः प्रविशति कृपः)

कृप.—(सोद्वेगं निश्वस्य)

एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते ।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः ॥ ७ ॥

(विलोक्य) तदयं वत्सः तिष्ठति । यावदुपसर्पामि । (उपसृत्य ससंभ्रमम्) वत्स ! समाश्वसिहि समाश्वसिहि ।

अश्व :—(संज्ञां लब्ध्वा, सास्रं) हा तात ! हा सकलभुवनैकगुरो ! (आक्रोशे) युधिष्ठिर ! युधिष्ठिर !

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतः त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषात्
सर्वं तदेकपद एव कथं निरस्तम् ॥ ८ ॥

सूतः—कुमार ! एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति ।

अश्वः—(पार्श्वे विलोक्य सबाष्पं) मातुल !

7

गतो येनाद्य त्वं सह रणभुवं सैन्यपतिना
य एकः शूराणां गुरुसमरकण्डूनिकषणः ।
परीहासाश्चित्राः सततमभवन् येन भवतः
स्वसुः श्लाघ्यो भर्ता क्व नु खलु स ते मातुल
गतः ? ॥ ९॥

कृपः—वत्स ! अलमत्यन्तशोकावेगेन ।

अश्वः—मातुल ! परित्यक्तमेव मया परीदेवितम्, एषोऽहं सुतवत्सलं ता
मेवानुगच्छामि ।

कृपः—वत्स ! अनुपपन्नमीदृशं व्यवसितं भवद्विधानाम् । पश्य—

निवापाञ्जलिदानेन केतनैः श्राद्धकर्मभिः ।
तस्योपकारे शक्तस्त्वं किं जीवन् किमुतान्यथा ॥ १०॥

अश्वः—आर्य ! सत्यमेवेदम् । किन्तु अतिदुर्वहत्वात् शोकभारस्य
शक्नोमि तातविरहितः क्षणमपि प्राणान् धारयितुम् ।
गच्छामि तमेवोद्देशं यत्र तथाविधमपि पितरं द्रक्ष्यामि ।

(उत्तिष्ठन् खड्गमालोक्य विचिन्त्य)

कृतमद्यापि शस्त्रग्रहणविडम्बनया । भगवत् ! शस्त्र !

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्
विमोक्ष्ये शस्त्र ! त्वामहमपि यतः
स्वस्ति भवते ॥ ११॥

(इत्युत्सृजति) (नेपथ्ये—)

राजानः ! कथमिह भवन्तः सर्वे गुरोः भारद्वाजस्य परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते ?

—(आकर्ण्य) (सक्रोधं शनैः शस्त्रं स्पृशन्) किं गुरोः भारद्वाजस्य परिभवः ?

(पुनर्नेपथ्ये)

आचार्यस्य त्रिभुवनगुरोः न्यस्तशस्त्रस्य शोकात्
द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य ।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंस
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ॥ १२ ॥

(सक्रोधं सकम्पं च कृपसूतौ दृष्ट्वा)

मेदम् ?

प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशं व्रतमास्थितस्य ।
तातस्य मे पलितमौलिनिरस्तकाशे
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥ १३ ॥

वत्स । एवं किल जनः कथयति ।

—किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः ?

-(सभयं) कुमार ! आसीदियं तस्य तेजोराशेर्देवस्य नवः परिभवावतारः ।

मा—हा तात । हा पुत्रप्रिय ! मम मन्दभागधेयस्य कृते शस्त्रपरित्यागात् तथाविधेन क्षुद्रेणात्मा परिभावितः । आः दुरात्मन् । पाञ्चालापसद !

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमस्यो
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृति

युधिष्ठिर ! युधिष्ठिर ! अजातशत्रो ! अमिथ्यावादिन् ! सानुजस्य ते किमनेनापकृतम् ? अर्जुन ! सात्यके ! लिन् वृकोदर ! माधव ! युक्तं नाम भवता सुरासुरम धनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो अमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपे अथवा सर्व एवैते पातकिनः । किमेतैः ?

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिः निर्मर्यादैः भवद्भिरुदायुधैः
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनां
अयमहमसृङ्मेदोमांसैः करोमि दिशां ब

सूतः—यदाज्ञापयति कुमारः (इति निष्क्रान्तः)

कृपः—वत्स ! अवश्यप्रतिकर्तव्येऽस्मिन् दारुणे निकाराग्नौ सर्वे कोऽन्यः त्वामन्तरेण शक्तः प्रतिकर्तुम् । किंतु—

अश्वः—किमतः परम्

कृपः—सैनापत्येऽभिषिच्य भवन्तमिच्छामि समरभुवं अवतारयितुम्

अश्वः—मातुल ! परतन्त्रमिदं अकिञ्चित्करं च ।

—वत्स ! न खलु परतन्त्रं, नाकिञ्चित्करं च । कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुम् । किं पुनः यौधिष्ठिरबलम् ! तदेवं मन्ये परिकल्पिताभिषेकोपकरणः कौरव-राजः न चिरात् त्वामेव अभ्यपेक्षमाणः तिष्ठति इति ।

—यद्येवं त्वरते मे परिभवानलदह्यमानमिदं चेतः तत्प्रतीकारजलाव-गाहनाय । तदहं गत्वा तातवधविषण्णमानसं कुरुपतिं सैनापत्य-स्वयंग्रहप्रणयसमाश्वासनया मन्दसन्तापं करोमि ।

—वत्स ! एवमिदम् । अतः तमेवोद्देशं गच्छावः ।

(इति परिक्रामतः)

(ततः प्रविशतः कर्णदुर्योधनौ)

धनः—अङ्गराज !

तेजस्वी रिपुहतबन्धुदुःखपारं
बाहुभ्यां व्रजति धृतायुधलवाभ्याम् ।
आचार्यः सुतनिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥ ६ ॥

—राजन् ! न खल्विदमेवम् ।

—कथं तर्हि ?

—एवं किलास्याभिप्रायः—यथा-अश्वत्थामा मया पृथिवीराज्येऽभि-षेक्तव्यः इति । तस्याभावात् वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्र-ग्रहणमिति तथा कृतवान् ।

—(सशिरःकम्पम् ) एवमिदम् ।

—एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य राजकस्य परस्परक्षयमपेक्षमाणेन तेन प्रधानपुरुषवधे उपेक्षा कृता ।

दुर्यो — उपपन्नमिदम् ।

कर्णः—अन्यच्च-राजन् ! द्रुपदेनाप्यस्य बाल्यात् प्रभृति अ
न स्वराष्ट्रे वासः दत्तः ।

दुर्योः—साधु महाराज ! साधु । निपुणमभिहितम् ।

कर्णः—न चायं ममैकस्याभिप्रायः । अन्ये अभियुक्ता अ
मन्यन्ते ।

दुर्यो—एवमेतत् । कः सन्देहः !

दत्त्वाऽभयं सोऽतिरथो वध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैवं चेत् कथमन्यथा ॥

कृपः —(विलोक्य) वत्स ! एषः दुर्योधनः सूतपुत्रेण सह अ
यां उपविष्टः तिष्ठति । तदुपसर्पावः । (तथा कृ

उभौ —विजयतां कौरवेश्वरः ।

दुर्यो—(दृष्ट्वा) अये ! कथं कृपोऽश्वत्थामा च । (आ
कृपं प्रति) गुरो ! अभिवादये । (अश्वत्था
आचार्यपुत्र !

एह्येहि मद्र्थहततात ! परिष्वजस्व
क्लान्तैरिदं मम निरन्तरमङ्गकैः ।
स्पर्शस्तवैष भुजयोः सदृश पितुस्ते
शोकेऽपि नो विकृतिमेति तनूरुहेषु ॥

(इत्यालिङ्ग्य पार्श्वे उपवेशयति ।)

(अश्वत्थामा बाष्पमुत्सृजति ।)

कर्णः—द्रोणात्मज ! अलमत्यर्थमात्मानं शोकानले प्रक्षिप्य ।

दुर्यो—आचार्यपुत्र ! को विशेषः आवयोः अस्मिन् व्यसनमहार्णवे ?

पश्य—

तातस्तव प्रणयवान् स पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि ।
किं तस्य देहनिधने कथयामि दुःखं
जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ १९ ॥

कृपः - वत्स ! यथाह कुरुपतिः तथैवैतत् ।

अश्व—राजन् ! एवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघूकर्तुम् ।

किन्तु—

मयि जीवति मत्तातः केशग्रहमवाप्तवान् ।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ॥ २० ॥

कर्णः—द्रौणायने ! किमत्र क्रियते ? यदा तेनैव सर्वपरिभवत्राणहेतुना शस्त्रमुत्सृजता तादृशीं अवस्थां आत्मा नीत ।

अश्व —अङ्गराज । किमाह भवान् ? किमत्र क्रियते इति ? श्रूयतां यत् क्रियते—

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः
पाण्डवीनां चमूनाम्
यो यः पाञ्चालगोत्रे शिशुरधिकवयाः
गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे
यश्च यश्च प्रतीपः

क्रोधान्धस्तस्य तस्य स्वयमपि
जगतमन्तकस्यान्तकोऽहम् ॥ २१ ॥

दुर्यो—आचार्यपुत्र ! तस्य तथाविधस्य अनन्यसाधारणस्य ते वीरभावस्य किमन्यत् सदृशम् ?

कृपः—राजन् ! सुमहान् खलु द्रोणापुत्रेण वोढुमध्यवसितः, समरभारः तदहमेवं मन्ये, भवता कृतपरिकरोऽयं उच्छेत्तुं लोकत्रयमपि समर्थः किं पुनर्यौधिष्ठिरबलम् ! अतः अभिषिच्यतां सैनापत्ये ।

दुर्यो—सुष्ठु युज्यमानमभिहितं युष्माभिः । किन्तु प्रक्लृप्तोऽयमर्थः अङ्गराजस्य ।

कृपः—राजन् ! असदृशपरिभवशोकसागरे निमज्जन्तमेनं अङ्गराजस्यो नैवोपेक्षितुं युक्तम् । अस्यापि तदेवारिकुलं अनुशासनीयम् अतः किमस्य पीडा न भविष्यति ?

अश्व—राजन् ! किमद्यापि युक्तायुक्तविचारणया ?

प्रयतपरिबोधितः स्तुतिभिरद्य शेषे निशां
अकेशवमपाण्डवं भुवनमद्य निस्सोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिनां
व्यपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥ २२ ॥

कर्णः—(विहस्य) द्रोणात्मज ! वक्तुं सुकरमिदं दुष्करमध्यवसितुम् बहवः कौरवबले अस्य कर्मणः शक्ताः ।

अश्व—अङ्गराज ! एवमिदम् । बहवः कौरवबलेऽत्र शक्ताः, किं दुःखोपहतः शोकावेशवशाद्ब्रवीमि, न पुनर्वीरजनाधिक्षेपेण ।

र्णः—मूढ ! दुःखितस्याश्रुपान्तः कुपितस्य चायुधद्वितीयस्य सङ्ग्रामावतरणं उचितम् । नैवंविधाः प्रलापाः ।

श्व.—(सक्रोधं) अरे । रे ! राधागर्भभारभूत ! सूतापसद ! ममापि-नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि, न शस्त्रेण ।

र्णः—(सक्रोधं) अरे ! रे ! वाचाट ! वृथाशस्त्रग्रहणदुर्विदग्ध ! वटो ।

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् ।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥ २३ ॥

श्व—(सक्रोधं) अरे रे ! रथकारकुलकलङ्क, आयुधानभिज्ञ ! तात-मप्यधिक्षिपसि ? अथवा—

स भीरुः शूरोवा प्रथितभुजसार. त्रिभुवने
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा ।
परित्यक्त शस्त्रं कथमिति स सत्यव्रतधरः
पृथासुनुः साक्षी त्वमसि रणभीरो ! क्वनु तदा
॥ २४ ॥

र्णः—(विहस्य) एवं भीरुरहम् । त्वं पुनः विक्रमैकरसं स्वपितरमनुसृत्य न जाने किङ्करिष्यसीति । महान् मे संशयो जातः । अपि च रे मूढ !

यदि शस्त्रमुज्झितमशस्त्रपाणयः
न निवारयन्ति किमरीनुदायुधान् ।
यदनेन मौलिदलनेऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥ २५ ॥

श्वः—(सक्रोधं सकम्पं च) दुरात्मन् !

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥ २

कृपदुर्योधनौ--गुरुपुत्र ! मर्षय, मर्षय । (इति निवारयतः ।)

(अश्वत्थामा चरणप्रहारं नाटयति)

कर्णः—(सक्रोधमुत्थाय, खड्गमाकृष्य) अरे ! दुरात्मन् । ब्रह्म
आत्मश्लाघिन् !

जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम् ।
अनेन लूनं खड्गेन पतितं वेत्स्यसि क्षितौ । २७

अश्वः—अरे मूढ ! जात्या काममवध्योऽहं चेत् इयं सा
परित्यक्ता । (इति यज्ञोपवीतं छिनत्ति) (पुनश्च सक्रोधं)

अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया ।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम्
॥

(उभावपि खड्गमाकृष्य अन्योन्यं प्रहर्तुमुद्यतौ, कृपदुर्योधनौ निवार

अश्व—मातुल ! मातुल ! किं निवारयसि ? अयमपि तार्कि
प्रगल्भः धृष्टद्युम्नपक्षपात्येव ।

कर्णः—राजन् ! न खल्वहं निवारयितव्यः ।

उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया ।
वित्रासितानां क्रोधान्धैः भवत्येषा विकत्थना ॥ २९

अश्व:—राजन्! मुञ्च मुञ्चैनम्। आसादयतु मद्भुजान्तरनिष्पेषसुलभमसूनामवसादनम्। अन्यच्च राजन्! स्नेहेन वा कार्येण वा यत्त्वमेनं ताताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि, तदुभयमपि वृथैव ते।

(इति प्रहर्तुमिच्छति)

कर्णः—(खड्गमुद्यम्य) अरे वाचाट! ब्राह्मणाधम! अयं न भवसि। राजन्! मुञ्च मुञ्च। न खल्वहं वारयितव्यः। (इति हन्तुमिच्छति)

(दुर्योधनकृपौ निवारयतः)

दुर्यो—कर्ण! गुरुपुत्र! कोऽयमद्य युवयोर्व्यामोहः?

कृपः—वत्स! अन्यदेव प्रस्तुतं अन्यत्रावेगः इति कोऽयं व्यामोहः? स्वबलव्यसनं चेदं अस्मिन् काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः।

अश्वः—मातुल! न लभ्यतेऽस्य कटुप्रलापिनः रथकारकुलकलङ्कस्य दर्पः शातयितुम्।

कृपः—वत्स! अकालः खलु स्वबलप्रधानविरोधस्य।

अश्वः—मातुल! यद्येवम्—

अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्तं तावत् प्रियमपि मयाऽस्त्रं रणमुखे।
बलानां नाथेऽस्मिन् परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखबलं वेत्तु समरे ॥ ३० ॥

(इति खड्गमुत्सृजति)

कर्णः—(विहस्य) कुलक्रमागतमेवैतत् भवादृशां यदस्त्रपरित्यागो नाम ।

अश्व—ननु रे ! अपरित्यक्तमपि भवादृशैः चिरपरित्यक्तमेव, मेव निष्फलत्वात् ।

कर्णः—अरे मूढ !

धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत् केन सेत्स्यति ॥ ३१ ॥

(नेपथ्ये)

आः दुरात्मन् ! द्रौपदीकेशाम्बराकर्षणमहापातकिन् ! धार्तराष्ट्रापसद ! चिरस्य खलु कालस्य मत्संमुखमागतोऽसि । क्षुद्रपशो ! क्वेदानीं गम्यते ? अपि च, भो भो राधेयदुर्योधनसौबलप्रभृतयः ! पाण्डवविद्वेषिणः चापपाणयः मानधनाः ! शृण्वन्तु भवन्तः—

कृष्टा येन शिरोरुहे नृपशुना
पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं
राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं
पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः
संरक्ष्यतां कौरवः ॥ ३२ ॥

(सर्वे आकर्णयन्ति)

अश्व—(सोत्प्रासम्) अङ्गराज ! सेनापते ! जामदग्न्यशिष्य ! द्रोणोपहासिन् ! भुजबलपरिरक्षितसकललोक ! इदं तदासन्नतरमेव संवृत्तम् । रक्षैनं साम्प्रतं भीमाद् दुःशासनम् ॥

कर्णः —आः का शक्तिर्वृकोदरस्य मयि जीवति दुःशासनस्य च्छायामप्या-क्रमितुम् ? युवराज ! न भेतव्यम्, अयमहमागतोऽस्मि ।

(इति निष्क्रान्तः)

अश्व—राजन् ! कौरवनाथ ! अभीष्मद्रोणं सम्प्रति कौरवबलं आलो-डयन्तौ भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्येते निवार-यितुम् । अतः स्वयमेव भ्रातुः प्रतीकारपरो भव ।

दुर्यो—आः का शक्तिः दुरात्मनः पवनंतनयस्य अन्यस्य वा मयि जीवति शस्त्रपाणौ वत्सस्य च्छायामप्याक्रमितुम् । वत्स ! न भेतव्यं न भेतव्यम् । कः कोऽत्र भोः ! रथमुपनय । (इति निष्क्रान्तः)

(नेपथ्ये कलकलः)

अश्वः —(अग्रतो विलोक्य) मातुल ! कष्टं कष्टम् । एषः भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं दुर्योधनराधेयौ शरवर्षैरभिद्रवति । सर्वथा पीतं दुःशासनशोणितं भीमेन । न खलु विषहे दुर्योधना-नुजस्यैनां विपत्तिमवलोकयितुम् । अनृतमनुमतं नाम ! मातुल ! शस्त्रं शस्त्रम् ।

सत्यादप्यनृतं श्रेयः धिक्स्वर्गं नरकोऽस्तु मे ।
भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम् ॥ ३३ ॥

(इति खड्गं ग्रहीतुमिच्छति।

(नेपथ्ये)

महात्मन् ! भारद्वाजसूनो ! न खलु सत्यवचनं अनुल्लङ्घितपूर्वं उल्लङ्घयितु-मर्हसि ।

कृपः—वत्स ! अशरीरिणी भवन्तं अनृतादभिरक्षति ।

अश्वत्थामा—कथमियममानुषी वाक् नानुमनुते सङ्ग्रामावतरणं मम ! आः पक्षपातिनो देवा अपि पाण्डवानाम् ! मातुल ! राधेय-क्रोधवशात् अनार्यमस्माभिः आचरितम् । अतः त्वमपि तावत् अस्य राज्ञः पार्श्ववर्ती भव ।

कृपः—गच्छाम्यहमत्र प्रतिविधातुम् । भवानपि शिबिरसंनिवेशमेव प्रतिष्ठताम् ॥

(परिक्रम्य निष्क्रान्तौ )

---

॥ टिप्पण्यः ॥

विकृतवेषा—विकृतः वेषः यस्याः सा ।

नृत्यन्ती—नृत् धातोः वर्तमानकृदन्तं स्त्री. प्र.ए.

(श्लोकः—१) हतमानुषमांसभोजने कुम्भसहस्रं वसाभिः सञ्चितं शोणितमनिशं पिबामि । वर्षशतं समरः भवतु ॥

अनिशं—निरन्तरम् ।

कुम्भसहस्रं—कुम्भानां सहस्रम् ।

सिन्धुराजः—जयद्रथः ।

प्रतिपद्यते—करोति ।

एहि—इण्धातुः लोट् म.ए.

(श्लोकः—२) यदि प्रत्यग्रहतानां मांसं रुधिरं च लभ्येत । तदा एषः मम परिश्रमः क्षणमात्रमेव लघु नश्येत् ॥

मात्रमेव —क्षणकालमेव, न तु निरन्तरम् ।

प्रहतानां—इदानीमेव हतानाम् ।

: – शीघ्रम् ।

येत्— नश् - विधिलिङ्–प्र.ए.

येत—लभ् , आत्मनेपदी, कर्मणि विधिलिङ् प्र.ए.

| | | |
|---|---|---|
| लभ्येत | लभ्येयातां | लभ्येरन् |
| लभ्येथाः | लभ्येयाथां | लभ्येध्वम् |
| लभ्येय | लभ्येवहि | लभ्येमहि ॥ |

हरति—वदति ।

दायते—नामधातुः लट्. प्र.ए.

कारणात्—त्वदर्थम् ।

ासितः—सन्नन्तं क्तान्तं नामपदम् ।

मांसं—हृदयमांसम् ।

श्रता—धर्मचारिणी ।

त्कचः —उत्धृताः कचाः यस्य सः उत्कचः । घट इव उत्कचः

शमः —शान्तिः ।

तशिरः कपालपात्रे–गजकपालरूपे पात्रे ।

तसेन्या—द्रौपद्या ।

दंशं —भोजनोपकरणम् उपसेचनम् ।

याधिपः—विराटः ।

तपुरुषाणां—सामान्यमनुष्याणाम् ।

पृष्ठं—पृष्ठस्य पश्चात् । अव्ययीभावः ।

संविधानेन—आज्ञया उपायेन वा ।

बुभुक्षा – भोक्तुमिच्छा ।

विस्रब्धा भूत्वा—निरातङ्का भूत्वा ।

सञ्चिनु—सङ्ग्रहं कुरु । सं+चि. लट्. म.ए.

वृकोदरः—भीमः । वृकस्य उदरमिव उदरं यस्य सः ।

पातव्यं—पातुं योग्यं । पानं कर्तव्यम् ।

असिपत्रेण—खड्गेन ।

व्यापाद्यते—हन्यते ।

एषः–प्रवेशकः संस्कृतदृश्यकाव्यक्षेत्र एवापूर्वः । अत्र जय
प्रमुखवीराणां वधः सूचितः । द्रोणस्य मरणमपि सू
'रुधिरप्रियः भीममनुप्रविश्य रक्तं पिबतु' इत्यनेन हिडि
संविधानेन भीमः रक्तपानदोषेण च विमुक्तो भवति । म
तु एवं न श्रूयते । अन्यच्च-अत्र राक्षसदम्पत्योः विलक्षणं
चारुतया चित्रितम् ।

गाण्डीविन्—गाण्डीवं अस्यास्तीति गाण्डीवी । अर्जुनायाग्निना
वदहनसमये दत्तं धनुः गाण्डीवम् ।

आचेष्टते—कुरुते ।

महारथाः – वीराः । "एको दशसहस्राणि योधयेद्यस्तु धन्वि
अस्त्रशस्त्रप्रवीणश्च स विज्ञेयो महारथः ॥"

कलधौतं=सुवर्णम् । कलः=मलः धौतः यस्य तत् ।

त्सरुणा—खड्गमुष्टिना ।

ताताधिष्ठितानां—द्रोणस्य मार्गदर्शने स्थितानाम् । कृतम्=निष्फलं,

(श्लोक: ३) अस्त्रज्वालावलीढप्रतिबलजलधेः अन्तः औवार्यमाणे सर्वधन्वी-श्वराणां गुरौ सेनानाथे मम अस्मिन् पितरि स्थिते, कर्ण ! अलं सम्भ्रमेण, कृप समरं व्रज, हार्दिक्य ! शङ्कां त्यज, चापद्वितीये ताते रणधुरां वहति, कः भयस्य अवकाशः ?

अवलीढः–व्याप्तः। प्रतिबलं–शत्रुसैन्यम्।

और्वः—बडबानलः । हार्दिक्य–कृतवर्मन् ।

ताते–द्रोणे । चापद्वितीये–चापसहाये ।

रणधुरां–युद्धभारम् ।

अस्मिन् श्लोके द्रोणस्य पराक्रमातिशयः वर्णितः ।

अस्त्र....माणे । यथा समुद्रस्यान्तः स्थित्वा बडबानलः समुद्रं शोषयति । एवमेव द्रोणोऽपि शत्रुसैन्यशोषकः इति । उपमालङ्कारोऽत्र ।

धन्वीश्वरणां—धनुरस्यास्तीति धन्वी, धन्विनां ईश्वराः, तेषाम् ।

चापद्वितीयः—चाप एव द्वितीयः (सहायः) यस्य, तस्मिन् ।

रणधुरां—रणस्य धुरम् । (ष.त) ऋक्पूरब्धूःपथामानक्षे ।

वहति—वह् - वर्तमानकृदन्तं. पु. स. ए.

कुतोऽद्यापि ते तातः—एतद्वाक्यं नेपथ्ये उक्तं भवति । एतच्च चूलिका इति कथ्यते । तल्लक्षणं तु–'अन्तर्यवनिकासंस्थैः चूलिकार्थस्य सूचनम् ।' तथा च यवनिकान्तः स्थित्वा अर्थस्य सूचनं चूलिकेति ।

ब्रूथ – ब्रू.लट् व. म. ब. । क्षुद्राः–नीचाः ।

प्रलपतां–असम्बद्धं गदताम् ।

सहस्रधा न दीर्णमनया जिह्वया—जिह्वा सहस्रशकलात्मना न भिन्ना।

(श्लोकः 4) द्वादशार्काः दहनकिरणैः विश्वं दग्धुं न उदिताः। सप्त भिन्नाः वाताः दिशि दिशि न वाताः। पुष्करावर्तका[illegible] गगनतलं न च्छन्नम्। पापाः शौर्यराशेः पितुः मे पापं कथं कथ[illegible]

अत्र पद्ये मन्दाक्रान्तावृत्तम्।

द्वादशार्काः—इन्द्रः, धाता, भगः, पूषा, मित्रः, वरुणः अ[illegible] आर्चैः विवस्वान्, त्वष्टा, सविता, विष्णुः।

अर्कः—सूर्यः। वाताः—पवनाः। छन्नं—आच्छादितम् पापं-मरण[illegible] सप्तधा सप्तभिन्नाः-एकोनपञ्चाशत् (४७) संख्याकाः वायवः।[illegible] विस्तृतं वर्णनं वायुपुराणाग्निपुराणायोः लभ्यते।

अत्रायमर्थः—यदा द्वादशसूर्याणामुदयः, एकोनपञ्चाशद्वायूनामपि प्रवह[illegible] पुष्करावर्तकादिमेघैः आकाशाच्छादनं च, तदैव प्रलयः। अत ए[illegible] प्रलयः असम्भवः। यदा प्रलयः तदा द्रोणस्य मरण[illegible] प्रलयासम्भवे द्रोणमरणस्याप्यसम्भवित्वमिति॥

वाताः—वाधातोः भूतकृदन्तरूपं प्र. ब.

छन्नं—छद् धातेः। भूतकर्मणिकृदन्तरूपम्

दग्धुं दह् तुमुन्नन्ताव्ययम्।

परित्रायतां—परि+त्रा. कर्मणि लोट् प्र. ए.

अस्तं—नाशम्। अश्रूणि—नपुं प्र. ब.

(श्लोकः ५) सत्यवाचा पृथासूनुना 'अश्वत्थामा हत' इति स्पष्टमुक्त्वा 'गजः' इति किल स्वैरं व्याहृतम्। तत् श्रुत्वा दयिततनयः[illegible]

तस्य राज्ञः प्रत्ययात् आजौ शस्त्राणि नयनसलिलं चापि तुल्यं मुमोच ।

त्र– मन्दाक्रान्तावृत्तम् ।

थासूनुना – कुन्तीपुत्रेण युधिष्ठिरेण ।

षे—अवशिष्टे । स्वैरं मन्दं स्वच्छन्दं वा । मन्दस्वच्छन्दयोः स्वैरः । इत्यमरः ।

त्र महाभारतस्य द्रोणपर्वणि 191—198 अध्यायेषु वर्णितः विषयः सूचितः । अत्र च करुणो रसः । व्याहृतं · उक्तम् । प्रत्ययात्– विश्वासात् । आजौ युद्धे । तुल्यं - युगपत्–समानकाले । पक्षपातिन् ! स्नेहयुत ! परिदेवनं–रोदनम् ।

लोकः ६) तात ! मम मृषावधं श्रुत्वा सुतवत्सलेन त्वया शरैः सह असवः विमुक्ताः । अहो ! अहं पुनः भवता विनाऽपि जीवामि । तत् क्रूरेऽपि मयि तव मुधा पक्षपातः ।

त्र वसन्ततिलकावृत्तम् ।

मृषा–मिथ्या । असवः प्राणाः ।
मुधा–व्यर्थम् । पक्षपातः–(अत्र) स्नेहः ।

वधं श्रुत्वा पितरि मृतेऽपि अश्वत्थामाऽयं जीवति । अतोऽसौ एवं क्रूरे अश्वत्थाम्नि द्रोणस्य स्नेहः व्यर्थः इति भावः ।

: सह असवः विमुक्ताः । अत्र द्रोणेन शराणां त्यागः असूनां त्यागश्च युगपदेव कृतः इति वर्णितम् । अतः सहोक्तिरलङ्कारः ।

सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः ।" इति तल्लक्षणम् । अत्र च समुचितोऽयमलङ्कारः । अश्वत्थाम्नः पितृवात्सल्यं, दुःखं, असहायकतां द्वन्द्वं च सम्यक् सूचयति ।

मृषा — मुधा=अव्ययम् ।

(श्लोकः-७) भुवि एकस्य केशग्रहस्य तावत् अयं दारुणः पाकः
अस्मिन् द्वितीये केशग्रहे प्रजाः नूनं निःशेषिताः ॥

भुवि — भूमौ । एकस्य-प्रथमस्य द्रौपदीकेशग्रहस्य ।

पाकः-फलम् । दारुणः-दुःखकरः ।

द्वितीये केशग्रहे—द्रोणस्य केशग्रहे ।

नूनं निःशेषिताः प्रजाः—अनेन दुर्योधनादीनां नाशरूपस्य रहस्य
कृतः ।

(श्लोकः-८) भवता आजन्मनः किल वितथं न उक्तम् । यत्
द्वेक्षि अतः त्वं अजातशत्रुः । गुरौ द्विजवरे ताते तत्
मम भाग्यदोषात् एकपदे एव निरस्तम् ॥ वसन्ततिलका

आजन्मनः—जननादारभ्य । अव्ययीभावः ।

वितथं—अनृतम् । न द्वेक्षि द्वेषं न कुरुषे ।

द्विष्-लट् म. ए.

| | | |
|---|---|---|
| द्वेष्टि | द्विष्टः | द्विषन्ति |
| द्वेक्षि | द्विष्ठः | द्विष्ठ |
| द्वेष्मि | द्विष्वः | द्विष्मः ॥ |

द्विजवरे—ब्राह्मणश्रेष्ठे । एकपदे-एकस्मिन् काले । निरस्तं-नाशं
द्रोणोऽयं ब्राह्मणः तथा गुरुश्च आसीदिति ज्ञेयम् ।

अजातशत्रुः—न जातः शत्रुः यस्य सः ॥

शारद्वतः—शरद्वतः अपत्यं पुमान् । कृपः ।

श्लोक:–९) मातुल ! येन सैन्यपतिना सह त्वं अद्य रणभुवं गतः, यः एकः शूराणां गुरुसमरकण्डूनिकषणः, येन भवतः सततं चित्राः परीहासाः अभवन्, सः ते स्वसुः श्लाघ्यः भर्ता क्व नु खलु गतः ! शिखरिणी वृत्तम् ।

गुरुसमरकण्डूनिकषणः –महायुद्धमदनिवारकः = शूराग्रेसरः । चित्राः– अद्भुताः ।

परीहासाः—नर्मोक्तयः । स्वसुः–भगिन्याः ।

कृपस्य भगिनी कृपी, सैव द्रोणस्य पत्नी, कृपः कृपी च शरद्वतः अपत्ये । तौ शन्तनुनृपेण कृपया पोषितौ । अत एव कृपः कृपी इति च नाम लब्धवन्तौ ।

परीहासाः—अत्र पूर्वपदस्य दीर्घत्वं "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति सूत्रेण

सेना एव सैन्यम् । सैन्यस्य पत्या सैन्यपतिना ।

यद्वा - सेनायां समवेताः सैन्याः । तेषां पत्या सैन्यपतिना । 'सेनायां वा' इति पाक्षिको ण्यत् ।

अत्र द्रोणकृपयोः मधुरबान्धव्यं सकरुणं चित्रितम् ।

स्वसुः—स्वसृ–ष.ए.

श्लोकः–१०) निवापाञ्जलिदानेन केतनैः श्राद्धकर्मभिः तस्य उपकारे त्वं जीवन् किमुत अन्यथा शक्तः ।

निवापः—तर्पणम् । केतनैः कृत्यैः गृहादिनिर्माणैर्वा । किमुत=अथवा– अव्ययम् ।

जीवन्—जीव्, वर्तमानकृदन्तम् प्र.ए.

(श्लोकः—११) शस्त्र ! नोचितमपि परिभवभयात् येन गृहीतं
यस्य प्रभावात् न खलु कश्चित् तव विषयः नाभूत्,
सुतशोकात् परित्यक्तमसि । न तु भयात् । अहं
विमोक्ष्ये । यतः स्वस्ति भवते । शिखरिणी वृत्तम् ।

परिभवभयात् द्रुपदादिक्षत्रियेभ्यः अवमानभयात् ।

नोचितमपि—ब्राह्मणेन द्रोणेन शस्त्रग्रहणमनुचितमपि । अत्र 'सु
इति समासः ।

न खलु कश्चिन्न विषयः—सर्वे विषयाः आसन् ।

विमोक्ष्ये – त्यक्ष्यामि ।

स्वस्ति भवते—मङ्गलं भवतु=स्वच्छन्दं गम्यताम् ।

अश्वत्थामा शस्त्रं सम्बोध्य एवं वदतीति बोध्यम् । अत्र च परिसंख्याल
'निषिद्ध्यैकं एकस्मिन् वस्तुयन्त्रणम्' इति तल्लक्षणम् ।

विमोक्ष्ये – वि+मुच् लट् उ.ए.

आसीः—अस्, लङ् म.ए.

अहं त्वां विमोक्ष्ये-(कर्तरि)
मया त्वं विमोक्ष्यसे-कर्मणि

भारद्वाजस्य – द्रोणस्य । नृशंसेन–क्रूरेण ।

(श्लोकः १२) आजौ शोकात् न्यास्तशस्त्रस्य, नयनसलिलक्षालिताद्र
त्रिभुवनगुरोः आचार्यस्य द्रोणस्य पलितधवले मौलौ पाणिं
नृशंसं कृत्वा अयं धृष्टद्युम्नः स्वशिबिरं याति । सर्वे सह
मन्दाक्रान्ता वृत्तम् ।

आजौ –युद्धे । आजिः स्त्री. स. ए.

पलितधवले—वार्धक्यात् श्वेते। मौलौ–शिरसि। नृशंसं–विनाशं। 'विनाशोऽपि नृशंसः स्यात्' (हारावलिः) क्रूरं कर्म वा।

धृष्टद्युम्नः—द्रुपदपुत्रः, द्रौपद्याः भ्राता

सहध्वम् सह् लोट्. म.ब.

एतच्चोद्घोषणं भीमस्य, अश्वत्थाम्नः शस्त्रत्यागानुपदमेव भवति। एवं अश्वत्थामा असहायः भवति।

न्यस्य – नि+अस्, ल्यप्।

न्यस्तशस्त्रस्य—न्यस्तं शस्त्रं येन सः। तस्य। अत्र मन्दाक्रान्तावृत्तम्।

(श्लोकः २३) आत्तधनुषां मनुजेश्वराणां प्रत्यक्षं प्रायोपवेशसदृशं व्रतं आस्थितस्य अशस्त्रपाणेः मे तातस्य पलितमौलिनिरस्तकाशे शिरसि शस्त्रं व्यापारितम्॥ वसन्ततिलकावृत्तम्।

आत्तधनुषां – गृहीतधनुषाम्। प्रायः–मरणम्। प्रायोपवेशसदृशं मरणन्तोपवाससदृशम्।

अशस्त्रपाणेः—निरायुधस्य।

पलितमौलिनिरस्तकाशे—पलितेन मौलिना तिरस्कृतः काशः (कुसुमं) इतिभावः।

व्यापारितं—प्रयुक्तम्।

आत्तधनुषां—आत्तं धनुः यैः तेषाम्।

मरणोपवासे निष्क्रियतया स्थितस्य द्रोणस्य शिरसि धृष्टद्युम्नेन शस्त्रं व्यापारितम्। निरायुधस्यास्य द्रोणस्य मारणं न सम्यगिति भावः।

अशस्त्रपाणेः—शस्त्रं पाणौ यस्य सः शस्त्रपाणिः तथा न भवतीति अशस्त्रपाणिः तस्य।

पाञ्चलापसद !- नीचपाञ्चाल !

परिभावित:—तिरस्कारविषय: कृत: ।

(श्लोक २४) तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य, शङ्कां त्यक्त्वा
उत्तमाङ्गे पाणिं विदधत: खलु ते स्मृतिं करधृतधनु: पाण्डुपाञ्चाल
सेनातूलोत्क्षेपप्रलयपवन: अश्वत्थामा किं न यात: ? । मन्दा
क्रान्ता वृत्तम् ।

विमुखं=निराशम् । उपलभ्य=प्राप्य=दृष्ट्वा ।
उत्तमाङ्गे शिरसि । तूल:=कार्पास: ।

पाण्डुपाञ्चालयो: सेना एव तूल:, तस्य उत्क्षेपे प्रलयस्य पवन: । अ
अश्वत्थाम्न: शत्रुनिर्मूलनसामर्थ्यं वर्णितम् ।

अत्र रूपकालङ्कार:

किं न यात: स्मृतिं ते अनेन अश्वत्थाम्न: अतिप्रसिद्धत्वं दर्शितम् ।

विदधत: — वि+धा वर्तमानकृदन्तं-पुं.ष.ए.

पाणिं विदधत: — हस्तेन धर्षितवत: ।

बाहुशालिन् — पराक्रमयुत !

द्विजन्मन:—द्वे जन्मनी यस्य स: द्विजन्मा, तस्य ।

पातकिन: — पापशीला: ।

मनुजपशुना --मनुजश्चासौ पशुश्च, तेन, कर्मधारय: ।

(श्लोक: २५) यै: निर्मर्यादै: उदायुधै: मनुजपशुभि: भवद्भि: इदं गु
पातकं कृतम्, अनुमतं, दृष्टं वा, नरकरिपुणा सार्धं सभीमकिरीटि
तेषां असृङ्मेदोमांसै: अयं अहं दिशां बलिं करोमि ॥

अनुमतं—अनुमोदितम् ॥ नरकरिपुणा-कृष्णेन ॥ असृक्—शोणितम् ।
बलिं=उपहारं=निवेदनम् । सभीमकिरीटिनां भीमश्च किरीटी च भीमकिरीटिनौ ताभ्यां सह ये वर्तन्ते तेषाम् ।

असृङ्मेदोमांसैः—असृक् च मेदश्च मांसं च, तैः ॥ अत्र अश्वत्थाम्नः दुःखकोपछलसङ्कल्पप्रतीकारस्फुटो वीरावेशः प्रकटितः ।

गुरुपातकं—गुरौ पातकं, गुरु च तत् पातकं च वा । नरकरिपुणा सार्धं अत्र तृतीयाविभक्तिः सहयुक्तेऽप्रधाने इत्यनेन।

स्यन्दनः—रथः । निकाराग्नौ-निकारः अवमानं इति अग्नौ । कर्मधारयः ।

अन्तरेण—त्यक्त्वा । त्वामन्तरेण--" अन्तरान्तरेण युक्ते ' इति द्वितीया ।

नकिञ्चित्करम्—प्रयोजनरहितम् ।

कृतपरिकरस्य—बद्धकटेः, बद्धयुद्धवेषस्य कृतपुरस्कारस्य वा ।

समं—न समर्थम् । परिपन्थीभवितुं-शत्रुतया स्थातुं । जलावगाहनाय-जले स्थातुम् । प्रणयः-प्रीतिः स्नेहः । उद्देशं प्रदेशम् ॥

(श्लोकः २६) तेजस्वी धृतायुधप्लवाभ्यां बाहुभ्यां रिपुहतबन्धुदुःखपारं व्रजति । आचार्यः संख्ये सुतनिधनं निशम्य, शस्त्रग्रहसमये विशस्त्रः किं आसीत् ? वसन्ततिलकावृत्तम् ।

प्लवः—कोलः उडुपम् । तेजस्वी-पराक्रमी ।
संख्ये-युद्धे । निशम्य-श्रुत्वा ।

विशस्त्रः—त्यक्तशस्त्रः । तेजस्वी-तेजः अस्यास्तीति ।

धृतायुधप्लवाभ्यां—आयुधमेव प्लवः, धृतः आयुधप्लवः याभ्यां ताभ्यां बाहुभ्याम् । अत्र रूपकं । वृथा-निरर्थकम् । (अव्ययम् )

कृतवान्—कृ+तवत् । राजकस्य—राजसमूहस्य । राज्ञां राजकं, तस्य । अभियुक्ताः—निपुणाः ।

(श्लोकः—२७) एवं न चेत्, अन्यथा कथं सः अतिरथः अस्मां किरीटिना वध्यमानं सिन्धुराजं उपेक्षेत ? ॥

अतिरथः—वीरयोधः ।

वध्यमानं—हन् धातोः कर्मणिवर्तमानकृदन्तं, द्वि.ए.

उपेक्षेत—उप+ईक्ष्, विधिलिङ् ।

अवतीर्य - अव+तॄ, ल्यप् ॥

(श्लोकः २८) अस्मदर्थहततात ! एहि, क्लान्तैः अङ्गैः इदं निरन्तरं परिष्वजस्व । तव भुजयोः एषः स्पर्शः ते पितुः शोकेऽपि नः तनूरुहेषु विकृतिं एति ॥ वसन्ततिलका ।

क्लान्तैः=म्लानैः । परिष्वजस्व—आलिङ्गनं कुरु ।

तनूरुहेषु—केशेषु, विकृतिं एति रोमाञ्चनं कुरुते ।

एहि—इ. लोट्-म.ए । परिष्वजस्व-परि+स्वज् लोट्.म.ए ।

आवेशयति—आ+विश् , णिच् लट्—प्र.ए.

द्रौणायनः—द्रोणस्य गोत्रापत्यं पुमान्, द्रोणवंशे जातः ।

विशेषः—भेदः ।

(श्लोकः २९) सः तातः मे पितुः प्रणयवान् सखा, शस्त्रे यथा गुरुः, तथा ममापि, तस्य देहनिधने दुःखं किं कथयामि शुचा मनसा त्वमेव तद् अवजनीहि ॥

वसन्ततिलकवृत्तम् ।

गुरुशुचा—अधिकदुःखेन । जानीहि ज्ञा, लोट्.म.ए. समानसुखदु.खत्वा-दावयोः अन्योऽन्यं किमपि न वक्तव्यमिति भावः ॥

लघूकर्तुं —न्यूनीकर्तुम् ।

(श्लोकः ३०) मयि जीविति मत्तातः केशग्रहं अवाप्तवान्, अन्ये पुत्रिणः पुत्रेभ्यः स्पृहां कथं करिष्यन्ति ?

मत्तातः — मम पिता द्रोणः । स्पृहां–प्रीतिम् ।

पुत्रिणः—पुत्रयुताः । 'पुत्रेभ्यः पुत्रिणः स्पृहाम्' इत्यत्र–स्पृहेरीप्सितः इति चतुर्थी । पुत्रिणः–पुत्र अस्यास्तीति पुत्रिन्, ते ।

(श्लोकः ३१) पाण्डवानां चमूनां यो यः स्वभुज-गुरुमदः शस्त्रं बिभर्ति, पाञ्चालगोत्रे यो यः शिशुः अधिकवयाः गर्भं शय्यां वा गतः, यो यः तत्कर्मसाक्षी । मयि रणे चरति यः, च यश्च प्रतीपः, तस्य तस्य स्वयं जगताम् अन्तकस्याप्यहं क्रोधान्धः अन्तकः (यमः) अस्मि ॥

चमूनां—सेनानाम् । पाण्डवी–पाण्डुसम्बन्धिनी ।
गोत्रे–वंशे । प्रतीपः–विरुद्धः ।

अन्तकः—यमः । न केवलं पाण्डवसेनानां, अपि तु आबालवृद्धपाञ्चालानां तथा यमस्यापि अन्तकः इत्यर्थः ।

अधिकं वयः येषां ते अधिकवयसः ।

अत्र अश्वत्थाम्नः क्रोधस्य अगाधता प्रकटिता । वृत्तं चास्य भावानुयायि ।

वोढुं–वह्–तुमुन्नन्ताव्ययम् । अध्यसितः–स्वीकृतः । निश्चितः । समरभर –युद्धभारः ।

प्राक्प्रतिपन्नः–पूर्वं दत्तः । अर्थः–अत्र सेनापतित्वम् । अङ्गराजस्य–कर्णस्य । निमज्जन्तं–नि+मस्जू, शतृप्रत्ययान्तं, पु. द्वि. ए.

अरिकुलम्—अरीणां कुलं । शत्रुकुलम् ।

अनुशासनीयम्—नाशनीयम्–शिक्षणीयं वा ।

(श्लोकः ३२) अद्य स्तुतिभिः प्रयत्नपरिबोधितः निशां शेषे । अद्य
अकेशवं अपाडवं निस्सोमकं भवति । अद्य दोश्शालिनां
रणकथा परिसमाप्यते । अद्य नृपाकाननातिगुरुः भुवः
व्यपैतु ॥

शेषे—निद्रां करिष्यसे । अकेशवमपाण्डवं कृष्णपाण्डवशून्यम्,

निस्सोमकं धृष्टद्युम्नादिपाञ्चालैः रहितम्

दोश्शालिनां पराक्रमशालिनां वीराणां वा ।

गुरुः—अधिकः । व्यपैतु–गच्छतु ॥

निशां शेषे—'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ।

व्यपैतु – वि+अप+इण्, लोट्. प्र.ए.

नृपकाननातिगुरुः—नृपाः एव काननं, तेन अतिगुरुः ।

सुकरं सुलभम् । अध्यवसितुं–कर्तुम् ।

अधि+अव+सो, तुमुन् । अध्यवसातुं इति तु युक्तम् ।

दुर्विदग्ध—वृथादर्पयुतं ! वाचाटः बहुगर्ह्यवाक् ।

(श्लोकः–२३) सूतो वा सूतपुत्रो वा यो वा को वा अहं भवामि ।
जन्म दैवायत्तम् । पौरुषं तु मदायत्तम् ॥

दैवायत्तं—दैवाधीनम् ।

अत्र प्रायः सर्वाणि कर्णवचनानि अनुष्टुप्छन्दसि वर्तन्ते । अनेन कर्ण
केवलं वाक्शूरः न, परं तु कृतिशूरः इत्यपि सूच्यते इतिकेचि

नअभिज्ञाः—मूर्खाः–अज्ञाः

श्लोकः २४) भीरुः शूरो वा सः त्रिभुवने प्रथितभुजसारः। तेन आजौ प्रतिदिनं यत् कृतं (तत्) इयं वसुधा वेत्ति (तेन) शस्त्रं कथ परित्यक्तम्। इति सः सत्यव्रतधरः पृथासूनुः साक्षी। रणभीरो! त्वं तदा क्व नु असि? मन्दाक्रान्ता वृत्तम्।

परिकुपितभीमार्जुनभये राजा समरे प्रियसखबलं वेत्तु ॥

पापः—अत्र कर्णः। न उपेयात्—न प्राप्नुयात्।

उप इण्-विधिलिङ् प्र. ए

ईयात् ईयातां ईयुः

ईयाः ईयातं ईयात।

ईयां ईयाव ईयाम।

वेत्तु —जानातु। विद्-लोट्. प्र. ए

(श्लोकः ३२) यावत् अहं धृतायुधः, तावत् अन्यैः आयुधैः किम्? यद्वा मम अस्त्रेण सिद्धं तत् केन सेत्स्यति?

चिरस्य खलु कालस्य-दीर्घकालानन्तरम्।

मत्संमुखं—ममाग्रम्।

सौबलः—सुबलायाः अपत्यं पुमान्, शकुनिः।

(श्लोकः—३२) येन नृपशुना पाञ्चालराजात्मजा शिरोरुहे कृष्टा, येन अस्याः परिधानमपि राज्ञः गुरूणां पुरः अपहृतम्, यस्य उरःस्थल-शोणितासवं पातुं अहं प्रतिज्ञातवान्. सोऽयं मद्भुजपञ्जरे निपतितः कौरवः संरक्ष्यताम् ॥

नृपशुना—अत्र दुःशासनेन। ना च पशुश्च तेन। कर्मधारयः

परिधानं—वस्त्रम्।

कौरवः—दुःशासनः ॥

शिरोरुहे—शिरसि रोहति, तस्मिन् ।

कृष्टा — कृष्—भूतकृदन्तरूपं स्त्री- प्र.ए

प्रतिज्ञातवान्—प्रति+ज्ञा भूतकर्तरिकृदन्तं प्र.ए.

मद्भुजपञ्जरे—मम भुजौ एव पञ्जरं, तस्मिन् ।

संरक्ष्यताम्—सम्+रक्ष्, कर्मणि लोट्—प्र.ए.

सोत्प्रासं—व्यङ्ग्यसहितम् । जामदग्न्य - परशुराम !

आसन्नतरं—समीपतरम् ।

पवनतनयस्य—पवनस्य तनयः भीमः, तस्य ।

अनुमतं—अङ्गीकृतम् ।

विषहे—वि+सह लट् उ.ए.

अभिद्रवति—आक्रामति

(श्लोकः—३३) सत्यादपि अनृतं श्रेयः । धिक्स्वर्गम् । मे नरकः अस्तु । त्यक्तं आयुधं भीमात् दुःशासनं त्रातुं अत्यक्तम् ।

श्रेयः — वरं—श्रेष्ठम् । त्रातुं—रक्षितुम् ।

भीमात् दुःशासनं त्रातुम् । अत्र 'भीत्रार्थानां भयहेतुः' इति पञ्चमी विभक्तिः ।

भारद्वाजसूनो—भारद्वाजस्य—द्रोणस्य सूनो-पुत्र ।

भारती—वाणी । प्रतिविधातुं—प्रतिक्रियां कर्तुम् ।

प्रतिष्ठताम्—प्रति+स्था, लोट् प्रथमपुरुषैकवचनम् । अत्र 'समवप्रविभ्यःस्थः' इति स्थाधातोः आत्मनेपदम् ॥

———

## अभ्यासाः

(क) एकवाक्येन संस्कृते उत्तरं लिखत—

१) भट्टनारायणस्य उपनाम किम् ?
२) भट्टनारायणः कस्य नृपस्य शासने जीवति स्म ?
३) क्षितीशवंशस्थापकः कः ?
४) राक्षस्याः नाम किम् ?
५) राक्षसदम्पत्योः स्वामिनी का ?
६) हिडिम्बया कृतं संविधानं किम् ?
७) द्रोणः केन कारणेन शस्त्रं त्यक्तवान् ?
८) द्रोणस्य शिरसि केन हस्तः व्यापारितः ?
९) कृपः कस्य मातुलः ?
१०) अश्वत्थाम्नः रथस्य नाम किम् ?
११) दुःशासनस्य शोणितं कः पिबति ?
१२) पुनः शस्त्रग्रहणात् अश्वत्थामा केन निवार्यते ?

(ख) लघुप्रबधंन्कं लिखत—

१) भट्टनारायणस्य देशकालजीवितादिनि ।
२) प्रवेशकस्य स्वारस्यम् ।
३) द्रोणस्य परिभववृत्तान्तः ।
४) अश्वत्थाम्नः विलापः
५) द्रोणस्य शस्त्रत्यागविषये कर्णदुर्योधनयोः प्रतिक्रिया ।
६) कर्ण—अश्वत्थाम्नोः कलहः ।
७) अश्वत्थाम्नः वीरावेशवचनानि ।
८) कर्णस्य आत्माभिमानः

९) अश्वत्थाम्नः पात्रचित्रणम्
१०) अप्रस्तुतावेगः इति शीर्षिका ॥

(ग) लघुटिप्पणीः लिखत—

१) भट्टनारायणः २) वेणीसंहारम् ।
३) प्रवेशकः । ४) युधिष्ठिरः ।
५) दुर्योधनः । ६) कृपाः ।
७) अश्वसेनः । ८) राक्षसः ।
९) द्रोणस्य पराक्रमः । १०) अश्वत्थाम्ना सस्त्रत्यागः ।

(घ) ससन्दर्भं विवृणुत—

१) वर्षशतं समरो भवतु ।
२) सुसंविधानो मे भर्ता कृतः ।
३) ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः ।
४) केशग्रहे द्वितीयोऽस्मिन् नूनं निःशेषिताः प्रजाः ।
५) तस्योपकारे शक्तस्त्वं किमुजीवन्नुतान्यथा ।
६) अयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ।
७) शोकेऽपि नो विकृतिमेति तनूरुहेषु ।
८) शिरसि चरण एष न्यस्यते वारयैनम् ॥
९) सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवः ।
१०) भीमाद्दुःशासनं त्रातुं त्यक्तमप्यक्तमायुधम् ।

(प) एतेषां श्लोकानां भाषान्तरं कृत्वा भावं विशदयत—
४, ६, ७, ८, ११, १५, १६, १८, २२,

(फ) सन्धि विभज्य नाम लिखत—

१) नोदिताः । २) मेघैर्न ।

३) शस्त्राण्याजौ । ४) स्त्रियेव ।
५) कश्चिन्न । ६) वाङ्नानुमनुते ।
७) तदनुरूपेणैव ॥

(ब) लिङ्गविभक्तिवचनानि लिखत—

१) त्सरुणा । २) अश्रूणि ।
३) केतनैः । ४) पितुः ।
५) स्वसुः । ६) आजौ ।
७) संख्ये । ८) शिरसि ।
९) शङ्कां । १०) राजन् ।

(भ) धातुलकारपुरुषवचनानि लिखत—

१) उपनयतु । २) ब्रूथ ।
३) कथयत । ४) द्रक्षि ।
५) समाश्वसिहि । ६) द्रक्ष्यामि ।
७) विमोक्ष्ये । ८) लभ्यते ।
९) संरक्ष्यताम् । १०) व्यपैतु ।
११) उपेक्षेत । १२) उपेयात् ।

म) व्याकरणरीत्या पदपरिचयं लिखत—

१) प्रलपताम् । ७) उपविष्टः ।
२) छन्नम् । ८) जीवन् ।
३) स्पृश्यमानम् । ९) मृषा ।
४) तेजस्वी । १०) प्रतिकर्तुम् ।
५) द्रौणायनिः । ११) उत्तीर्य ।
६) वध्यमानम् ।

य) व्याकरणविशेषं लिखत—

१) अलमिदानीं मम रथप्रतीक्षया ।

२) स्वस्ति भवते ।

३) त्वया विना ।

४) नरकरिपुणा सार्धम् ।

५) शेषे निशाम् ।

६) भीमात् दुःशासनं त्रातुम् ।

७) विजयताम् ।

८) प्रतिष्ठताम् ॥

र) प्रयोगान्तरं लिखत --

१) पापाः पापं कथयत ।

२) समाश्वसितु कुमारः ।

३) पितरं द्रक्ष्यामि ।

४) विजयतां कौरवेश्वरः ।

५) शृण्वन्तु भवन्तः ।

६) संरक्ष्यतां कौरवः ।

७) दीर्णं अनया जिह्वया ।

८) तातो नामास्तमुपगतः ।

ल) वाक्यदोषान् निवारयत—

१) अलं कर्मणः ।

२) स्वस्ति विष्णुम् ।

३) तव विना ।

४) विजयतु कुमारः ।

५) राजपथा न गच्छति ॥

व) अलङ्कारं सलक्षणं निर्दिशत—

१) दग्धुं विश्वं दहनकिरणैः—

२) स्त्रियेव नृपचक्रसन्निधौ—

३) पाण्डुपाञ्चालगोत्रोत्क्षेप्रलयपवनः ।

श) वृत्तं सप्रस्तारं निर्दिशत—

१) आजन्मनो न वितथं भवता किञ्चोक्तम् ।

२) गृहीतं येनासीः परिभवभयान्नोचितमपि ।

३) सूतो वा सूतपुत्रो वा
यो वा को वा भवाम्यहम् ।
दैवायत्तं कुले जन्म
मदायत्तं तु पौरुषम् ॥

---

## कक्षाभ्यासः (वेणीसंहारे)

१) द्रोणमरणवृत्तान्त महाभारते अवलोकयत ।

२) पाठ्यभागे—द्रोणस्य कर्णस्य अश्वत्थाम्नश्च सम्बन्धीनि विशेषणानि सङ्गृह्य लिखत ।

३) पाठ्यभागे दृश्यमानानां दीर्घसमासानां सङ्ग्रहं कुरुत ।

४) अधोनिर्दिष्टौ ग्रन्थौ विलोकयत—
"भट्टनारायणन वेणीसंहार

ओन्दु अध्ययन " (कर्णाटक भाषायाम्)
डा॥ पि. एस्. रामानुजम् ऐ.पि.एस्.
"वेणीसंहार ए स्टडी " आङ्गलभाषायाम्
प्रो. ए.बि. गजेन्द्रगडकर् -

५) पंप-रन्नयोः ग्रन्थौ अवलोकयत ।

———

# व्याकरणविभागः

## सन्धिप्रकरणम्

वर्णद्वयस्य 'संयोगः' विकारकारणीभूतः सन्धिः। सन्धौ प्रामुख्येन त्रयः भेदाः भवन्ति (i) स्वरसन्धि : (ii) व्यञ्जन-सन्धिः (iii) विसर्गसन्धिः चेति। तत्र प्रमुखाः सर्वे स्वरसन्धयः व्यञ्जनसन्धयश्च प्रथमवर्षस्य पाठ्यपुस्तके एव निरूपिताः। अतोऽत्र विसर्ग-सन्धिः केवलं निरूप्यते।

### विसर्गसन्धिः

१. ह्रस्वत्अकारात् परस्य विसर्गस्य ह्रस्व-अकारे परे घोषवति हलि च परे ओकारः आदेशः भवति।

रामः+अत्र=रामो अत्र=रामोऽत्र

कः+अपि=को अपि=कोऽपि

कृष्णः+गच्छति=कृष्णो गच्छति

देवः+याति=देवो याति

२. ह्रस्वात् अकारात् परस्य विसर्गस्य ह्रस्व-अकारभिन्ने स्वरे लोपः भवति।

जनः+आगतः=जन आगतः

बालः+इति=बाल इति

३. दीर्घाकारात् परस्य विसर्गस्य स्वरे परे घोषवति व्यञ्जने परे च लोपः भवति।

देवाः अत्र=देवा अत्र

प्रजाः इति=प्रजा इति

मृगाः मृताः=मृगा मृताः

४. अकारभिन्नात् स्वरात् परस्य विसर्गस्य स्वरे परे घोषवति व्यञ्जने परे च रेफः भवति।

हरिः+अत्र=हरिरत्र

शम्भुः+अगतः=शम्भुरागतः

कपिः+दृष्टः=कपिर्दृष्टः

५. विसर्गस्य चकारे छकारे शकारे वा परे शकारः आदेशो भवति।

गुरुः+चिनोति=गुरुश्चिनोति

चन्द्रः+छादयति=चन्द्रश्छादयति

सोमः+शेते=सोमश्शेते

६. विसर्गस्य टकारे ठकारे षकारे वा परे षकारः आदेशः भवति।

धनुः+ठङ्कारः=धनुष्ठङ्कारः

गुरुः+टीकते=गुरुष्टीकते

कर्णः+षष्ठः=कर्णष्षष्ठः

७. विसर्गस्य तकारे थकारे सकारे वा परे सकारः आदेशः भवति।

शिष्यः+तनोति=शिष्यस्तनोति

सूर्यः+तपति=सूर्यस्तपति

व्याहारः+सत्यः=व्याहारस्सत्यः

तत् एतत् इत्येतयोः प्रथमाविभक्तेः विसर्गस्य लोपो भवति ह्रस्वाकारभिन्ने स्वरे व्यञ्जने च परतः ।

एषः गतः=एष गतः

सः दृष्टः=स दृष्टः

## अभ्यासः

पाठ्यपुस्तके विद्यमानानि विसर्गसन्धेः उदाहरणानि संगृह्णीत ।

## ॥ विभक्तिरूपप्रकरणम् ॥

पदवी-पूर्वकक्ष्यायाः प्रथमवर्षस्य पुस्तके अजन्तेषु पुँल्लिङ्ग-स्त्रीलिङ्ग-नपुंसकलिङ्गानां शब्दानां सप्तविभक्तिषु रूपाणि निर्दिष्टानि। तथैव मुख्यानां सर्वनामशब्दानां सर्वविभक्तिरूपाणि च तत्र सूचितानि। इदानीं हलन्तेषु अथवा व्यञ्जनान्तेषु प्रमुखानां केषाञ्चित् शब्दानां रूपाणि निर्दिश्यन्ते दिङ्मात्रदर्शनार्थम्। अधिकं तु शब्दमञ्जर्यादिभ्यः ग्रन्थेभ्यः लब्धुं शक्यते ॥

### ॥ हलन्तपुँल्लिङ्गशब्दाः ॥

#### चकारान्तः पुँल्लिङ्गः जलमुक् शब्दः

| | | |
|---|---|---|
| जलमुक् | जलमुचौ | जलमुचः |
| हे जलमुक् | हे जलमुचौ | हे जलमुचः |
| जलमुचं | जलमुचौ | जलमुचः |
| जलमुचा | जलमुग्भ्यां | जलमुग्भिः |
| जलमुचे | जलमुग्भ्यां | जलमुग्भ्यः |
| जलमुचः | जलमुग्भ्यां | जलमुग्भ्यः |
| जलमुचः | जलमुचोः | जलमुचाम् |
| जलमुचि | जलमुचोः | जलमुक्षु |

एवं—सुवाक्, पयोमुक् इत्यादयः।

#### जकारान्तः पुँल्लिङ्गः भिषक् शब्दः

| | | |
|---|---|---|
| भिषक् | भिषजौ | भिषजः |
| हे भिषक् | हे भिषजौ | हे भिषजः |

| | | |
|---|---|---|
| भिषजं | भिषजौ | भिषजः |
| भिषजा | भिषग्भ्यां | भिषग्भिः |
| भिषजे | भिषग्भ्यां | भिषग्भ्यः |
| भिषजः | भिषग्भ्यां | भिषग्भ्यः |
| भिषजः | भिषजोः | भिषजां |
| भिषजि | भिषजोः | भिषक्षु |

एवं ऋत्विक् । तनुत्यक् इत्यादयः

तकारान्तः पुँल्लिङ्गः मरुत् शब्दः

| | | |
|---|---|---|
| मरुत् | मरुतौ | मरुतः |
| हे मरुत् | हे मरुतौ | हे मरुतः |
| मरुतं | मरुतौ | मरुतः |
| मरुता | मरुद्भ्यां | मरुद्भिः |
| मरुते | मरुद्भ्यां | मरुद्भ्यः |
| मरुतः | मरुद्भ्यां | मरुद्भ्यः |
| मरुतः | मरुतोः | मरुतां |
| मरुति | मरुतोः | मरुत्सु |

एवं इन्द्रजित् बिभ्यत् शासत् इत्यादयः

तकारान्तः पुँल्लिङ्गः पचत् शब्दः

| | | |
|---|---|---|
| पचन् | पचन्तौ | पचन्तः |
| हे पचन् | हे पचन्तौ | हे पचन्तः |
| पचन्तं | पचन्तौ | पचतः |
| पचता | षचद्भ्यां | पचद्भिः |
| पचते | पचद्भ्यां | पचद्भ्यः |

| | | |
|---|---|---|
| पचतः | पचद्भ्यां | पचद्भ्यः |
| पचतः | पचतोः | पचतां |
| पचति | पचतोः | पचत्सु |

एवं गच्छत् तिष्ठत् पिबत् इत्यादयः

तकारान्तः पुँल्लिङ्गः धीमत् शब्दः

| | | |
|---|---|---|
| धीमान् | धीमन्तौ | धीमन्तः |
| हे धीमन् | हे धीमन्तौ | हे धीमन्तः |
| धीमन्तं | धीमन्तौ | धीमतः |
| धीमता | धीमद्भ्यां | धीमद्भिः |
| धीमते | धीमद्भ्यां | धीमद्भ्यः |
| धीमतः | धीमद्भ्यां | धीमद्भ्यः |
| धीमतः | धीमतोः | धीमतां |
| धीमति | धीमतोः | धीमत्सु |

एवं गुणवत् भगवत् इत्यादयः

तकारान्तः पुँल्लिङ्गः महत् शब्दः

| | | |
|---|---|---|
| महान् | महान्तौ | महान्तः |
| हे महन् | हे महान्तौ | हे महान्तः |
| महान्तं | महान्तौ | महतः |
| महता | महद्भ्यां | महद्भिः |
| महते | महद्भ्यां | महद्भ्यः |
| महतः | महद्भ्यां | महद्भ्यः |
| महतः | महतोः | महतां |
| महति | महतोः | महत्सु |

नकारान्तः पुँल्लिङ्गः राजन् शब्दः

| | | |
|---|---|---|
| राजा | राजानौ | राजानः |
| हे राजन् | हे राजानौ | हे राजानः |
| राजानं | राजानौ | राज्ञः |
| राज्ञा | राजभ्यां | राजभिः |
| राज्ञे | राजभ्यां | राजभ्यः |
| राज्ञः | राजभ्यां | राजभ्यः |
| राज्ञः | राज्ञोः | राज्ञाम् |
| राज्ञि–राजनि | राज्ञोः | राजसु |

एवं महिमन् गरिमन् सुत्रामन् इत्यादयः

नकारान्तः पुँल्लिङ्गः आत्मन् शब्दः

| | | |
|---|---|---|
| आत्मा | आत्मानौ | आत्मानः |
| हे आत्मन् | हे आत्मानौ | हे आत्मानः |
| आत्मानं | आत्मानौ | आत्मनः |
| आत्मना | आत्मभ्यां | आत्मभिः |
| आत्मने | आत्मभ्यां | आत्मभ्यः |
| आत्मनः | आत्मभ्यां | आत्मभ्यः |
| आत्मनः | आत्मनोः | आत्मनां |
| आत्मनि | आत्मनोः | आत्मसु |

एवं पाप्मन् यज्वन् इत्यादयः

नकारान्तपुँल्लिङ्गः गुणिन् शब्दः

| | | |
|---|---|---|
| गुणी | गुणिनौ | गुणिनः |

| | | |
|---|---|---|
| हे गुणिन् | हे गुणिनौ | हे गुणिनः |
| गुणिनं | गुणिनौ | गुणिनः |
| गुणिना | गुणिभ्यां | गुणिभिः |
| गुणिने | गुणिभ्यां | गुणिभ्यः |
| गुणिनः | गुणिभ्यां | गुणिभ्यः |
| गुणिनः | गुणिनोः | गुणिनां |
| गुणिनि | गुणिनोः | गुणिषु |

एवं यशस्विन् करिन् इत्यादयः

सकारान्तः पुँल्लिङ्गः विद्वच्छब्दः

| | | |
|---|---|---|
| विद्वान् | विद्वांसौ | विद्वांसः |
| हे विद्वन् ! | हे विद्वांसौ ! | हे विद्वांसः |
| विद्वांसं | विद्वांसौ | विदुषः |
| विदुषा | विद्वद्भ्यां | विद्वद्भिः |
| विदुषे | विद्वद्भ्यां | विद्वद्भ्यः |
| विदुषः | विद्वद्भ्यां | विद्वद्भ्यः |
| विदुषः | विदुषोः | विदुषाम् |
| विदुषि | विदुषोः | विद्वत्सु |

एवं उपेयिवान् तस्थिवान् इत्यादयः

## हलन्तस्त्रीलिङ्गशब्दाः

चकारान्तः स्त्रीलिङ्गः त्वक् शब्दः

| | | |
|---|---|---|
| त्वक् | त्वचौ | त्वचः |
| हे त्वक् | हे त्वचौ | हे त्वचः |
| त्वचं | त्वचौ | त्वचः |
| त्वचा | त्वग्भ्यां | त्वग्भिः |

| | | |
|---|---|---|
| त्वचे | त्वग्भ्यां | त्वग्भ्यः |
| त्वचः | त्वग्भ्यां | त्वग्भ्यः |
| त्वचः | त्वचोः | त्वचां |
| त्वचि | त्वचोः | त्वक्षु |

रेफान्तः स्त्रीलिङ्गः गीर् शब्दः

| | | |
|---|---|---|
| गीः | गिरौ | गिरः |
| हे गीः | हे गिरौ | हे गिरः |
| गिरं | गिरौ | गिरः |
| गिरा | गीर्भ्यां | गीर्भिः |
| गिरे | गीर्भ्यां | गीर्भ्यः |
| गिरः | गीर्भ्यां | गीर्भ्यः |
| गिरः | गिरोः | गिरां |
| गिरि | गिरोः | गीर्षु-गीष्षु |

एवं पूः धूः इत्यादयः

शकारान्तः स्त्रीलिङ्गः दिक्शब्दः

| | | |
|---|---|---|
| दिक् | दिशौ | दिशः |
| हे दिक् | हे दिशौ | हे दिशः |
| दिशं | दिशौ | दिशः |
| दिशा | दिग्भ्यां | दिग्भिः |
| दिशे | दिग्भ्यां | दिग्भ्यः |
| दिशः | दिग्भ्यां | दिग्भ्यः |
| दिशः | दिशोः | दिशां |
| दिशि | दिशोः | दिक्षु |

एवं यादृक् तादृक् इत्यादयः

## हलन्तनपुंसकलिङ्गशब्दाः

### तकारान्तनपुंसकलिङ्गः पचत् शब्दः

| | | |
|---|---|---|
| पचत् | पचन्ती | पचन्ति |
| पचत् | पचन्ती | पचन्ति |
| पचता | पचद्भ्यां | पचद्भिः |
| पचते | पचद्भ्यां | पचद्भ्यः |
| पचतः | पचद्भ्यां | पचद्भ्यः |
| पचतः | पचतोः | पचतां |
| पचति | पचतोः | पचत्सु |

एवं गच्छत् भवत् इत्यादयः

### नकारान्तः नपुंसकलिङ्गो नामन् शब्दः

| | | |
|---|---|---|
| नाम | नाम्नी-नामनी | नामानि |
| हे नामन् हे नाम | हेनाम्नी-हेनामनी | हेनामानि |
| नाम | नाम्नी-नामनी | नामानि |
| नाम्ना | नामभ्यां | नामभिः |
| नाम्ने | नामभ्यां | नामभ्यः |
| नाम्नः | नामभ्यां | नामभ्यः |
| नाम्नः | नाम्नोः | नाम्नां |
| नाम्नि-नामनि | नाम्नोः | नामसु |

एवं दाम धाम इत्यादयः

### सकारान्तनपुंसकलिङ्गो मनस् शब्दः

| | | |
|---|---|---|
| मनः | मनसी | मनांसि |
| हे मनः | हे मनसी | हे मनांसि |
| मनः | मनसी | मनांसि |
| मनसा | मनोभ्यां | मनोभिः |
| मनसे | मनोभ्यां | मनोभ्यः |
| मनसः | मनोभ्यां | मनोभ्यः |
| मनसः | मनसोः | मनसां |
| मनसि | मनसोः | मनस्सु |

एव पयः वयः यशः इत्यादयः

### हलन्तविशेषशब्दाः

### नकारान्तः पुँल्लिङ्गः श्वन् शब्दः

| | | |
|---|---|---|
| श्वा | श्वानौ | श्वानः |
| हे श्वन् | हे श्वानौ | हे श्वानः |
| श्वानं | श्वानौ | शुनः |
| शुना | श्वभ्यां | श्वभिः |
| शुने | श्वभ्यां | श्वभ्यः |
| शुनः | श्वभ्यां | श्वभ्यः |
| शुनः | शुनोः | शुनां |
| शुनि | शुनोः | श्वसु |

### नकारान्तः पुंलिङ्गः युवन् शब्दः

| | | |
|---|---|---|
| युवा | युवानौ | युवानः |

| | | |
|---|---|---|
| हे युवन् | हे युवानौ | हे युवानः |
| युवानं | युवानौ | यूनः |
| यूना | युवभ्यां | युवभ्यः |
| यूने | युवभ्यां | युवभिः |
| यूनः | युवभ्यां | युवभ्यः |
| यूनः | यूनोः | यूनाम् |
| यूनि | यूनोः | युवसु |

नकारान्तः पुँल्लिङ्गः पथिन् शब्दः

| | | |
|---|---|---|
| पन्थाः | पन्थानौ | पन्थानः |
| हे पन्थाः | हे पन्थानौ | हे पन्थानः |
| पन्थानं | पन्थानौ | पथः |
| पथा | पथिभ्यां | पथिभिः |
| पथे | पथिभ्यां | पथिभ्यः |
| पथः | पथिभ्यां | पथिभ्यः |
| पथः | पथोः | पथाम् |
| पथि | पथोः | पथिषु |

सकारन्तः पुँल्लिङ्गः पुंस् शब्दः

| | | |
|---|---|---|
| पुमान् | पुमांसौ | पुमांसः |
| हे पुमन् | हे पुमांसौ | हे पुमांसः |
| पुमांसं | पुमांसौ | पुंसः |
| पुंसा | पुम्भ्यां | पुम्भिः |
| पुंसे | पुम्भ्यां | पुम्भ्यः |
| पुंसः | पुम्भ्यां | पुम्भ्यः |

| | | |
|---|---|---|
| पुंसः | पुंसोः | पुंसाम् |
| पुंसि | पुंसोः | पुंस्सु |

## अभ्यासः

१. एषां शब्दानां सर्वविभक्तिषु रूपाणि लिखित—

राजन्, धीमत्-, आत्मन्, नामन्, मनस्, पथिन्।

२. एतेषां लिङ्गवचनविभक्तीः निर्दिशत—

ऋत्विजा, शासते, धीमतां महत्सु, राज्ञः।
आत्मभ्यां, करी, गिरां, नामानि, पथः॥

३. लिखत—

विद्वत् शब्दस्य षष्ठीविभक्तिरूपाणि।
मनस् शब्दस्य चतुर्थीविभक्तिरूपाणि।

४. पाठ्यपुस्तके दृष्टानां सर्वनामशब्दानां विभक्तिरूपाणि कण्ठस्थीकुरुत॥

---

## कृदन्तप्रकरणम्

कृत्प्रत्यययोगेन धातुभ्यः कृदन्ताः भवन्ति। कृदन्तेषु—वर्तमान-कृदन्ताः=(शत्रन्ताः शानजन्ताश्च), भूतकृदन्ताः (क्तान्ताः, क्तवत्वन्ताश्च) भविष्यत्कृदन्ताः, क्त्वान्ताः, ल्यबन्ताः, तुमुन्नन्ताः, णमुलन्ताश्च प्रथमवर्षस्य पाठ्यपुस्तके एव प्रदर्शिताः सन्ति। एतेषां पुनरावर्तनं तत एव कर्तव्यम्॥

# विध्यर्थकृदन्ताः

धातुभ्यः विध्यर्थककृत्प्रत्ययानां योगेन विध्यर्थककृदन्ताः भवन्ति। प्रधानतया त्रयः प्रत्ययाः विध्यर्थकाः—'तव्य' 'अनीय', 'य' इति ।एते प्रत्ययाः धातुभ्यः भावार्थे कर्मार्थेऽपि च विधीयन्ते। कर्मणि विहिताः विशेष्यनिघ्नाः । अतः विध्यर्थकाः लिङ्गत्रयेऽपि रूपाणि भजन्ते। भावे विहितास्तु नपुंसके भवन्ति ।

## तव्यप्रत्ययान्ताः

पठ्+तव्य=पठितव्यः, पठितव्या, पठितव्यम् ।

कृ+तव्य=कर्तव्यः, कर्तव्या, कर्तव्यम् ।

नी+तव्य=नेतव्यः, नेतव्या, नेतव्यम् ।

गम्+तव्य=गन्तव्यः, गन्तव्या, गन्तव्यम् ।

भू+तव्य=भवितव्यम्

## अनीयर् प्रत्ययान्ताः —

पठ्+अनीय=पठनीयः पठनीया पठनीयं

कृ+अनीय=करणीयः करणीया करणीयं

नी+अनीय=नयनीयः नयनीया नयनीयं

गम्+अनीय=गमनीयः गमनीया ममनीयम्

भू+अनीय=भवनीयम्

## यप्रत्ययान्ताः —

कृ+य=कार्यः कार्या कार्यम्

नी+य=नेयः नेया नेयम्

गम्+य=गम्यः गम्या गम्यम्

भू+य=भाव्यम्

शताधिकधातूनां नानाप्रत्ययान्तरूपाणि परिशिष्टभागे दत्तानि। त्रिषु लिङ्गेषु सर्वविभक्तिरूपाणि अभ्यसनीयानि व्युत्पत्तये॥

अभ्यासः

एतेषां त्रिविधानि विध्यर्थकरूपाणि निर्दिशत—

श्रु, रम्, दृश्, स्मृ, पा, वच्, रक्ष्ः लिख् भू, ग्रह् त्यज, निन्द्, पत् बुध्, भी, क्रन्द्. स्तु, स्पृह्, हन्, याच्॥

---

इच्छार्थक-प्रेरणार्थकरूपाणि

धातुभ्यः णिच् प्रत्ययचयोगेन णिजन्ताः अथवा प्रेरणार्थकधातवः भवन्ति। तिङ्प्रत्यययोगेन च तेभ्यः प्रेरणार्थकरूपाणि सिध्यन्ति। यथा—

गच्छन्तं प्रेरयति = गमयति

कुर्वन्त प्रेरयति = कारयति

पिबन्तं प्रेरयति = पाययति

पठन्तं प्रेरयति = पाठयति

एवमेव सन् प्रत्यययोगेन धातुभ्यः सन्नन्ताः अथवा इच्छार्थकधातवः भवन्ति। तिङ् प्रत्यययोगेन च तेभ्यः इच्छार्थकरूपाणि सिध्यन्ति यथा-

गन्तुम् इच्छति = जिगमिषति

कर्तुम् इच्छति=चिकीर्षति

पठितुम् इच्छति=पिपठिषति

सन्नन्तधातुभ्यः सन्नन्तनामपदानि अपि सिध्यन्ति। तानि

गन्तुम् इच्छा=जिगमिषा

गन्तुम् इच्छुः=जिगमिषुः

कर्तुम् इच्छा=चिकीर्षा

कर्तुम् इच्छुः=चिकीर्षुः

पातुम् इच्छा=पिपासा

पातुम् इच्छुः=पिपासुः

पठितुम् इच्छा=पिपठिषा

पठितुम् इच्छुः=पिपठिषुः

पाठ्यपुस्तकस्य परिशिष्टभागे प्रमुखधातूनां प्रेरणार्थकरूपाणि इच्छ
रूपाणि च निर्दिष्टानि। तानि तत एव अवगन्तव्यानि।

## अभ्यासः

१. सन् प्रत्ययः कस्मिन् अर्थे प्रयुज्यते ?

२. प्रेरणार्थे प्रयुज्यमानः प्रत्ययः कः ?

३. सोदाहरणं विवृणुत–सन्नन्तः, णिजन्ताः।

४. एतेषां क्रियापदानां प्रेरणार्थकरूपाणि लिखत।
गच्छति गायति, ददाति, जानाति, तरति

५. एतेषां धातूनाम् इच्छार्थकरूपाणि लिखत।
जिं, तृ, दा, दृश्, पा, भुज्, श्रु
लभ्, पठ्

## प्रयोगपरिवर्तनम्

प्रयोगविषयः प्रथमवर्षपुस्तके निरूपितः। सार्वधातुकलकारेषु कानिचित् उदाहरणानि च दत्तानि। इतरेषु लकारेषु कानिचिदुदाहरणानि अत्र दीयन्ते। नियमा पूर्ववदेव ज्ञातव्याः

### उदाहरणानि

कर्तरि — कर्मणि/भावे

रामो राजा बभूव = रामेण राज्ञा बभूवे
अहं मनुष्यम् अद्राक्षम् = मया मनुष्यः अदर्शि
मृगः प्राणान् मुमोच = मृगेण प्राणाः मुमुचिरे
त्वं रहस्यम् अज्ञासीः = त्वया रहस्यम् अज्ञायि
अहं श्रीमान् भूयासम् = मया श्रीमता भविषीष्ट
नरो नगरं गन्ता = नरेण नगरं गन्ता
अहं तत्र भविष्यामि = मया तत्र भविष्यते
जनाः कार्याणि करिष्यन्ति = जनैः कार्याणि करिष्यन्ते
राक्षसः त्वां हनिष्यति = राक्षसेन त्वं हनिष्यसे
बालः नगरं गमिष्यति = बालेन नगरं गंस्यते
राजा सिंहासने आसामास = राज्ञा सिंहासने आसामासे
यदि सुवृष्टिरभविष्यत् तर्हि याचकाः भिक्षामलप्स्यन्त=
यदि सुवृष्ट्या अभविष्यत तर्हि याचकैः भिक्षा अलप्स्यन्त

## समासप्रकरणम्

समासः साधारणतया षोढा विभज्यते। तत्र तत्पुरुषः, द्विगुः द्वन्द्वश्च उक्तपूर्वाः इति, अवशिष्टाः अव्ययीभावः, कर्मधारयः बहुव्रीहिश्च अत्र निरूप्यन्ते।

## (१) अव्ययीभावसमासः

प्रायेण पूर्वपदार्थप्रधानः अव्ययीभावः । अव्ययीभावस्य समस्त अव्ययमेव भवति । अयं च नित्यसमासः । यतः समासघटकपद वाक्यरूपेण पृथक् प्रयोगो नास्ति ॥

दिने दिने = प्रतिदिनम्

शक्तिं अनतिक्रम्य = यथाशक्ति

कूपस्य समीपे = उपकूपम्

पृष्ठस्य पश्चात् = अनुपृष्ठम्

## (२) कर्मधारायसमासः

'तत्पुरुषः समानाधिकरणः कर्मधारायः' इत्युक्त्यनुसारेण कर्मधार तत्पुरुषसमासस्यैव भेदः । अत्र अधिकरणं नाम विभक्तिः । तत्पुरु समासस्य विग्रहवाक्यस्थानां पदानां एका एव विभक्तिर्भवति चेत् त कर्मधारयः भवति । अतः अत्रापि प्रायः उत्तरपदार्थः प्रधानः । सप्तवि अयं समासः । अथ क्रमेणोदाहरणानि—

१) विशेषणपूर्वपदकर्मधारयः—

नीलं च तत् उत्पलं च=नीलोत्पलम्

कृष्णः च असौ सर्पश्च=कृष्णसर्पः

२) विशेष्यपूर्वपदकर्मधारयः—

वैयाकरणश्चासौ खसूचिश्च=वैयाकरणखसूचिः

३) विशेषणोभयपदकर्मधारयः—

पूर्वं स्नातः पश्चादनुलिप्तः=स्नातानुलिप्तः

भोज्यं च तत् उष्णं च=भोज्योष्णम्

४) उपमानपूर्वपदकर्मधारयः—

रतिः इव सुन्दरी=रतिसुन्दरी

लता इव तन्वी=लतातन्वी

५) उपमानोत्तरपदकर्मधारयः—

पुरुषः व्याघ्र इव=पुरुषव्याघ्रः

कपिः कुञ्जरः इव=कपिकुञ्जरः

६) सम्भावनापूर्वपदकर्मधारयः—

तमालः इति वृक्षः=तमालवृक्षः

विन्ध्यः इति पर्वतः=विन्ध्यपर्वतः

७) अवधारणापूर्वपदकर्मधारयः—

युक्तिः एव रत्नं=युक्तिरत्नम्

कल्पना एव ऊर्मिः=कल्पनोर्मिः

मयूराः एव व्यंसकाः=मयूरव्यंसकाः

मुखं एव चन्द्रः=मुखचन्द्रः

## ३. बहुव्रीहि समासः

प्रायेण अन्यपदार्थप्रधानः बहुव्रीहिः। अत्र समासघटकपदानां अर्थात् अन्यस्य अर्थस्य प्राधान्यं भवति। बहवः व्रीहयः यस्य यस्मिन् वा सः बहुव्रीहिः इति बहुव्रीहिसमासस्य बहुव्रीहिशब्द एव उदाहरणं भवितुमर्हति।

प्रधानतया बहुव्रीहौ द्वौ भेदौ यथा—

१) समानाधिकरणबहुव्रीहिः—

समासघटकपदानि विग्रहवाक्ये यदि एकस्यामेव विभक्तौ (समानाधिकरणे) भवन्ति, तर्हि समानाधिकरणबहुव्रीहिः भवति। समानाधिकरणबहुव्रीहिरेव साधारणतया सर्वत्र आश्रयणीयः।

पीतं अम्बरं यस्य सः=पीताम्बरः=विष्णुः ।

नीलः कण्ठः यस्य सः=नीलकण्ठः=शिवः ।

२) व्यधिकरणबहुव्रीहिः—

समासघटकपदानि विग्रहवाक्ये यदि भिन्नभिन्नविभक्तिषु (व्यधि-करणे) भवन्ति, तर्हि व्यधिकरणबहुव्रीहिः भवति । अयं क्वचिदे दृश्यते ।

प्रायः आयुधार्थकपदवतां नाम्नां, उपमानशब्दानां वा विनि अयं प्रवर्तते ।

चक्रं पाणौ यस्य सः=चक्रपाणिः=विष्णुः

गजस्य आननमिव आननं यस्य सः=गजाननः=गणेशः ॥

---

## अभ्यासः

१. एतेषां विग्रहवाक्यानि लिखत—

बहुव्रीहिः, शस्त्रपाणिः, उपनगरम्, यथाशास्त्र प्रतिदेशम् ।

२. एतेषां एकमेकमुदाहरणं प्रयच्छत—

बहुव्रीहिः, अव्ययीभावः, कर्मधारयः

३. सोदाहरणं विवृणुत—

उपमानोत्तरपदकर्मधारयः

व्यधिकरणबहुव्रीहिः

४. पाठ्यग्रन्थे विद्यमानानि समासवन्ति पदानि सङ्गृह्णीत। तेषां विग्रहवाक्यानि लिखत। अव्ययीभावकर्मधारय-बहुव्रीहिवर्गेषु तेषां पट्टिकां रचयत ॥

## धातुरूपप्रकरणम्

पदवीपूर्वकक्ष्यायाः प्रथमवर्षस्य पुस्तके प्रथम–चतुर्थ–षष्ठ–दशम-गणानां धातूनां लट्-लङ्–लोट्–विधिलिङ् लट्–लकाराणां रूपाणि निर्दिष्टानि।

अधुना तु तेष्वेव गणेषु विद्यमानानां धातूनां अवशिष्टेषु लकारेषु रूपाणि निरूप्यन्ते ॥

### तत्र–भ्वादिगणः–परस्मैपदम्

भूधातोः—लिट्लकारस्य रूपाणि—

| | | | |
|---|---|---|---|
| प्र) | बभूव | बभूवतुः | बभूवुः |
| म) | बभूविथ | बभूवथुः | बभूव |
| उ) | बभूव | बभूविव | बभूविम |

लुङ्

| | | | |
|---|---|---|---|
| प्र) | अभूत् | अभूतां | अभूवन् |
| म) | अभूः | अभूतं | अभूत |
| उ) | अभूवं | अभूव | अभूम |

अशीर्लिङ्

| | | | |
|---|---|---|---|
| प्र) | भूयात् | भूयास्तां | भूयासुः |
| म) | भूयाः | भूयास्तं | भूयास्त |
| उ) | भूयासं | भूयास्व | भूयास्म |

लुट्

| | | |
|---|---|---|
| प्र) भविता | भवितारौ | भवितारः |
| म) भवितासि | भवितास्थ | भवितास्थ |
| उ) भवितास्मि | भवितास्वः | भवितास्मः |

लङ्

| | | |
|---|---|---|
| प्र) अभविष्यत् | अभविष्यतां | अभविष्यन् |
| म) अभविष्यः | अभविष्यतं | अभविष्यत |
| उ) अभविष्यं | अभविष्याव | अभविष्याम |

भ्वादिगणः— आत्मनेपदम्

वन्द् धातोः लिट् लकारस्यरूपाणि

| | | |
|---|---|---|
| ववन्दे | ववन्दाते | ववन्दिरे |
| ववन्दिषे | ववन्दाथे | ववन्दिध्वे |
| ववन्दे | ववन्दिवहे | ववन्दिमहे |

लुङ्

| | | |
|---|---|---|
| अवन्दिष्ट | अवन्दिषातां | अवन्दिषत |
| अवन्दिष्ठाः | अवन्दिषातां | अवन्दिध्वं |
| अवन्दिषि | अवन्दिष्वहि | अवन्दिष्महि |

आशीर्लिङ्

| | | |
|---|---|---|
| वन्दिषीष्ट | वन्दिषीयास्तां | वन्दिषीरन् |
| वन्दिषीष्ठाः | वन्दिषीयास्तां | वन्दिषीध्वं |
| वन्दिषीय | वन्दिषीवहि | वन्दिषीमहि |

लुट्

| | | |
|---|---|---|
| प्र) वन्दिता | वन्दितारौ | वन्दितारः |
| म) वन्दितासे | वन्दितासाथे | वन्दिताध्वे |
| उ) वन्दिताहे | वन्दितास्वहे | वन्दितास्महे |

लृङ्

| | | | |
|---|---|---|---|
| प्र) | अवन्दिष्यत | अवन्दिष्येतां | अवन्दिष्यन्त |
| म) | अवन्दिष्यथाः | अवन्दिष्येथां | अवन्दिष्यध्वम् |
| उ) | अवन्दिष्ये | अवन्दिष्यावहि | अवन्दिष्यामहि |

दिवादिगणः—परस्मैपदम्

सिध्धातेः लिट् लकारस्य रूपाणि

| | | | |
|---|---|---|---|
| प्र) | सिषेध | सिषिधतुः | सिषिधुः |
| म) | सिषेधिथ | सिषिधथुः | सिषिध |
| उ) | सिषेध | सिषिधिव | सिषिधिम |

लुङ्

| | | | |
|---|---|---|---|
| प्र) | असिधत् | असिधतां | असिधन् |
| म) | असिधः | असिधतं | असिधत |
| उ) | असिधं | असिधाव | असिधाम |

आशीर्लिङ्

| | | | |
|---|---|---|---|
| प्र) | सिध्यात् | सिध्यास्तां | सिध्यासुः |
| म) | सिध्याः | सिध्यास्तं | सिध्यास्त |
| उ) | सिध्यासं | सिध्यास्व | सिध्यास्म |

लुट्

| | | | |
|---|---|---|---|
| प्र) | सेद्धा | सेद्धारौ | सेद्धारः |
| म) | सेद्धासि | सेद्धास्थः | सेद्धास्थ |
| उ) | सेद्धास्मि | सेद्धास्वः | सेद्धास्मः |

लृङ्

| | | | |
|---|---|---|---|
| प्र) | असेत्स्यत् | असेत्स्यतां | असेत्स्यन् |
| म) | असेत्स्यः | असेत्स्यतं | असेत्स्यत |
| उ) | असेत्स्यं | असेत्स्याव | असेत्स्याम |

## आत्मनेपदम्

### विद् धातोः लिट् लकारस्य रूपाणि

| | | | |
|---|---|---|---|
| प्र) | विविदे | विविदाते | विविदिरे |
| म) | विविदिषे | विविदाथे | विविदिध्वे |
| उ) | विविदे | विविदिवहे | विविदिमहे |

### लुङ्

| | | | |
|---|---|---|---|
| प्र) | अवित्त | अवित्सातां | अवित्सत |
| म) | अवित्थाः | अवित्साथां | अविद्ध्वम् |
| उ) | अवित्सि | अवित्स्वहि | अवित्स्महि |

### आशीर्लिङ्

| | | | |
|---|---|---|---|
| प्र) | वित्सीष्ट | वित्सीयास्तां | वित्सीरन् |
| म) | वित्सीष्ठाः | वित्सीयाथां | वित्सीध्वं |
| उ) | वित्सीय | वित्सीवहि | वित्सीमहि |

### लुट्

| | | | |
|---|---|---|---|
| प्र) | वेत्ता | वेत्तारौ | वेत्तारः |
| म) | वेत्तासे | वेत्तासाथे | वेत्ताध्वे |
| उ) | वेत्ताहे | वेत्तास्वहे | वेत्तास्महे |

### लङ्

| | | | |
|---|---|---|---|
| प्र) | अवेत्स्यत | अवेत्स्येतां | अवेत्स्यन्त |
| म) | अवेत्स्यथाः | अवेत्स्येथां | अवेत्स्यध्वं |
| उ) | अवेत्स्ये | अवेत्स्यावहि | अवेत्स्यामहि |

## तुदादिगणः—परस्मैपदम्

### लिख् धातोः लिट्लकारस्य रूपाणि

| | | | |
|---|---|---|---|
| प्र) | लिलेख | लिलिखतुः | लिलिखुः |
| म) | लिलेखिथ | लिलिखथुः | लिलिख |
| उ) | लिलेख | लिलिखिव | लिलिखिम |

### लुङ्

| | | | |
|---|---|---|---|
| प्र) | अलेखीत् | अलेखिष्टां | अलेखिषुः |
| म) | अलेखीः | अलेखिष्टं | अलेखिष्ट |
| उ) | अलेखिषं | अलेखिष्व | अलेखिष्म |

### आशीर्लिङ्

| | | | |
|---|---|---|---|
| प्र) | लिख्यात् | लिख्यास्तां | लिख्यासुः |
| म) | लिख्याः | लिख्यास्तं | लिख्यास्त |
| उ) | लिख्यासं | लिख्यास्व | लिख्यास्म |

### लुट्

| | | | |
|---|---|---|---|
| प्र) | लेखिता | लेखितारौ | लेखितारः |
| म) | लेखितासि | लेखितास्थः | लेखितास्थ |
| उ) | लेखितास्मि | लेखितास्वः | लेखितास्मः |

### लृङ्

| | | | |
|---|---|---|---|
| प्र) | अलेखिष्यत् | अलेखिष्यतां | अलेखिष्यन् |
| म) | अलेखिष्यः | अलेखिष्यतं | अलेखिष्यत |
| उ) | अलेखिष्यं | अलेखिष्याव | अलेखिष्याम |

आत्मनेपदम्

| | | | |
|---|---|---|---|
| प्र) | मिमिले | मिमिलाते | मिमिलिरे |
| म) | मिमिलिषे | मिमिलाथे | मिमिलिध्वे |
| उ) | मिमिले | मिमिलिवहे | मिमिलिमहे |

लुङ्

| | | | |
|---|---|---|---|
| प्र) | अमिलिष्ट | अमिलिषातां | अमिलिषत |
| म) | अमिलिष्ठाः | अमिलिषाथां | अमिलिध्वम् |
| उ) | अमिलिषि | अमिलिष्वहि | अमिलिष्महि |

आशीर्लिङ्

| | | | |
|---|---|---|---|
| प्र) | मिलिषीष्ट | मिलिंषीयास्तां | मिलिषीरन् |
| म) | मिलिषीष्ठाः | मिलिपीयास्थां | मिलिषीध्वं |
| उ) | मिलिषीय | मिलिषीवहि | मिलिषीमहि |

लुट्

| | | | |
|---|---|---|---|
| प्र) | मिलिता | मिलितारौ | मिलितारः |
| म) | मिलितासे | मिलितासाथे | मिलिताध्वे |
| उ) | मिलिताहे | मिलितास्वहे | मिलितास्महे |

लङ्

| | | | |
|---|---|---|---|
| प्र) | अमिलिष्यत | अमिलिष्येतां | अमिलिंष्यन्त |
| म) | अमिलिष्यथाः | अमिलिष्येथां | अमिलिष्यध्वं |
| उ) | अमिलिष्ये | अमिलिष्यावहि | अमिलिष्यामहि |

चुरादिगणः—परस्मैपदम्

कथधातोः लिट् लकारस्य रूपाणि

| | | | |
|---|---|---|---|
| प्र) | कथयामास | कथयामासतुः | कथयामासुः |

| | | | |
|---|---|---|---|
| म) | कथयामासिथ | कथयामासथुः | कथयामास |
| उ) | कथयामास | कथयामासिव | कथयामासिम |

(एवं कथयाञ्चकार, कथयांबभूव)

लुङ्

| | | | |
|---|---|---|---|
| प्र) | अचकथत् | अचकथतां | अचकथन् |
| म) | अचकथः | अचकथतं | अचकथत |
| उ) | अचकथं | अचकथाव | अचकथाम |

आशीर्लिङ्

| | | | |
|---|---|---|---|
| प्र) | कथ्यात् | कथ्यास्तां | कथ्यासुः |
| म) | कथ्याः | कथ्यास्तं | कथ्यास्त |
| उ | कथ्यासं | कथ्यास्व | कथ्यास्म |

लुट्

| | | | |
|---|---|---|---|
| प्र) | कथयिता | कथयितारौ | कथयितारः |
| म) | कथयितासि | कथयितास्थः | कथयितास्थ |
| उ) | कथयितास्मि | कथयितास्वः | कथयितास्मः |

लृङ्

| | | | |
|---|---|---|---|
| प्र) | अकथयिष्यत् | अकथयिष्यतां | अकथयिष्यन् |
| म) | अकथयिष्यः | अकथयिष्यतं | अकथयिष्यत |
| उ) | अकथयिष्यं | अकथयिष्याव | अकथयिष्याम |

## अभ्यासः

१. एतेषां धातूनां अधोनिर्दिष्टेषु लकारेषु रूपाणि लिखत—

इष–लिट्, ईक्ष्–लुङ्‌ कृ–लिट्, गम्–लुट् चिन्त्–
जि लट्, ज्ञा-विधिलिङ्, भू आशीर्लिङ्, दृश्-लुट्॥

२. इतरवचनानि लिखत—

त्यज्यते .... ....

अपतत् .... ....

.... पेठतुः ....

.... .... पिबन्तु

३. एतेषां धातु-लकार-पुरुष-वचनानि निर्दिशत —

देहि, आगच्छ, ददर्श, अरक्षत, तिष्ठ हनि
अवदत् हन्ति ॥

४. पाठ्यपुस्तके दृष्टानां समेषां क्रियापदानां—
तत्तल्लकारेषु सर्वरूपाणि लिखत ॥

## धातुरूपकोशः

संस्कृतभाषायां विद्यमानेषु धातुषु नितरां प्रमुखा ये सन्ति अर्थपुरस्सरं नानाप्रत्ययान्तरूपैः समं च पुस्तकस्यान्ते अत्र परिशि दत्ताः ।

एतेन व्याकरण–भाषान्तरपाठ—प्रबन्धरचनेत्यादिषु प्र भवतीति ।

—— ——

# अलङ्कारादिविभागः

## अलङ्कारप्रकरणम्

शब्दार्थौ सहितौ काव्यम् । काव्यानुसन्धानात् कोऽपि विशिष्टः अनुभवः उत्पद्यते । अस्य काव्यानुभवस्य विश्लेषणादेव अस्य शास्त्रस्य नाम अलङ्कारशास्त्रमिति कथ्यते ।

शब्दालङ्कारः अर्थालङ्कारश्चेति द्विधा अलङ्कारः । केचन अलङ्काराः संस्कृतमन्दारग्रन्थे पटिताः । अन्ये केचन अलङ्काराः लक्षणोदाहरणपूर्वकं दीयन्ते—

### व्यतिरेकः

व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।
शैला इवोन्नताः सन्तः किन्तु प्रकृतिकोमलाः ॥

अत्र उपमानः पर्वतः, उपमेयः सज्जनः । पर्वतवत् सन्तः अपि उन्नताः सन्ति । पर्वतस्य तु कठिणः स्वभावः । सज्जनानां स्वभावस्तु प्रकृत्या कोमलः वर्तते । अयमेवात्र व्यतिरेकः ॥

### अतिशयोक्तिः

निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम् ।
मन्यन्तेऽतिशयोक्तिं तां अलङ्कारतया यथा ॥

लोकातिक्रान्तगोचरं वचः अतिशयोक्तिः । तद् वचः किञ्चित्कारणेन प्रवर्तते । उदाहरणम्—

'पश्य नीलोत्पलद्वन्द्वात् निस्सरन्ति शिताः शराः ॥"

अत्र नीलोत्पल–शरशब्दाभ्यां लोचनयोः कटाक्षाणां च अभे- दृश्यते । अत्र उपमानोपमेययोः लोकातिक्रान्तत्वेन वर्णनात् अतिशयोक्तिः निमित्तं तु कटाक्षयोः तीक्ष्णता ॥

## अप्रस्तुतप्रशंसा

अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया ।
एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते ॥

यत्र अप्रस्तुतवृत्तान्तवर्णनेन प्रस्तुतवृत्तान्तस्य सूचना क्रियते तत्राय- मलङ्कारः । खगेषु चातक एव विशिष्टः श्रेष्ठः कृतार्थश्च । यतः इन्द्रं विना अन्यत्र कुत्रापि न याचते इति । अत्र चातकवृत्तान्तः अप्रस्तुतः प्रस्तुतस्तु अभिमानिनः कस्यचित्कवेः वृत्तन्तः ।

'अङ्गुलिमुद्राधिगमः' इतिनाटके 'चीयते बालिशस्यापि·' इत्य- श्लोकः अप्रस्तुतप्रशंसालंकारस्योदाहरणम् ।

## समासोक्तिः

समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥

यत्र प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाम्यबलात् अप्रस्तुतवृत्तान्तस्य सूचना भवति, तत्र ससंक्षेपा उक्तिरेव समासोक्तिः इति कथ्यते ॥

अत्र रक्तवर्णः चन्द्रमाः प्राचीं दिशं स्पृशति इति प्रस्तुत- वृत्तान्तः । अस्मिन् वर्ण्यमाने अप्रस्तुतवृत्तान्तः प्रतीयते, विशेष- णसाम्यात् ॥

## परिसङ्ख्यालङ्कारः

परिसंख्या निषिध्यैकं एकस्मिन् वस्तुयन्त्रणम् ।
स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् ॥

ऐकस्मिन् स्थाने वस्तुनः अभावं उक्त्वा अन्यस्थाने तस्य प्रभावः कथ्यते। स्नेहस्य– तैलस्य अभावः दीपेषु दृश्यते। परन्तु रमणीहृदयेषु स्नेहः–प्रीतिः अस्त्येवेति ॥

उदाहरणान्तरम्—

रागो धर्मे न विषयसुखे, सङ्गतिः सत्सभायां
न स्त्रीगोष्ठ्यां व्यसनमनिशं नीतिशास्त्रे न चाक्षे।
कीर्त्यां नित्यार्जनचतुरता नार्थजाते विनोदो
विद्याभ्यासे न च परिजने रुद्रदेवस्य राज्ञः ॥

अप्रस्तुतावेगः इ ते नाटके 'गृहीतं येनासीः' इति श्लोकश्च अस्योदाहरणम् ॥

## अभ्यासः

१ अतिशयोक्तिः, परिसंख्या, समासोक्तिः, अप्रस्तुतप्रशंसा, व्यतिरेकः—एषामलङ्काराणां लक्षणं लिखित्वा उदाहरणं लिखत।

२ पाठ्यपुस्तके विद्यमानान् अलङ्कारान् सङ्गृह्य सलक्षणं विवृणुत

३ काव्ये अलङ्कारस्य किं प्रयोजनं वर्तते ?

४ अलङ्कारस्य स्वरूपविषये टिप्पणीं लिखत ॥

## छन्दोविचारः

गद्यं पद्यं मिश्रं चेति संस्कृतसाहित्यं (काव्यं) त्रिप्रकारं वर्तते। पद्यं पादचतुष्टयात्मकं भवति। पादरहितः पदसमुदायः गद्यम्। गद्यपद्योभयात्मकं मिश्रम्। पद्यरचनायाः स्वरूपं ज्ञातुं छन्दोविचारः पठितव्यः।

छन्दश्शास्त्रे पद्यं वृत्तं जातिश्चेति द्विधा विभज्यते। अक्षराणां संख्यां स्थानं चाश्रित्य रचितं पद्यं वृत्तम्। मात्राणां संख्यामवलम्ब्य रचितं

पद्यं जातिः । मात्रा नाम उच्चारणकालः । तत्र ह्रस्वाक्षरस्य एका मात्रा । दीर्घाक्षरस्य द्वे मात्रे ।

वृत्ते अक्षरं द्विविधम्–लघु गुरु चेति । ह्रस्वाक्षरं लघु, दीर्घाक्षरं गुरु । संयुक्ताक्षरपरकं अनुस्वारसंहितं विसर्गयुतं वा ह्रस्वमपि गुरु भवति ।

लघ्वक्षराणि– अ इ उ ऋ ऌ ।

गुर्वक्षराणि-- आ ई ऊ ॠ ए ए ओ औ अं अः ।

'—' अनेन चिह्नेन लघु, '₀' अनेन चिह्नेन गुरु च सूच्यते। अयं च प्राचीनः क्रमः । परन्तु-'—' अस्य चिह्नस्य गुरु इति, '₀' अस्य चिह्नस्य लघु इति च क्वचिद् व्यवहारः वर्तते । अत्र च प्राचीन-पद्धतिरेव अनुसृता ॥

वृत्तपादस्य प्रस्ताररचनायां गणानां प्रयोजनं वर्तते । अक्षरत्रया-त्मकाः गणाः । ते लघुगुरुव्यवस्थामाश्रित्य परस्परं भिन्नाः । तत्र–

य गणः—₀₀, रगणः ₀–₀, तगणः–₀₀–, भगणः₀––, जगणः–₀–, सगणः ––₀, मगणः ₀₀₀, नगणः – – – ॥

गणानामेषां स्मरणसौलभ्यार्थं अयं श्लोकः अस्ति—

आदिमध्यावसानेषु यरता यान्ति लाघवम् ।
भजसा गौरवं यान्ति मनौ तु गुरुलाघवम् ॥

श्लोकानां पठनसमये विरामार्थं नियतस्थानं निर्दिष्टम् वर्तते । तत् यतिरिति कथयन्ति । एषा यतिः पदमध्ये न प्रयोक्तव्या ॥

# वृत्तानां लक्षणोदाहरणानि

मालिनी—

अस्मिन् छन्दसि प्रतिपादं पञ्चदशाक्षराणि वर्तन्ते । अष्टमाक्षरानन्तरं, ततः सप्तमाक्षरानन्तरं च यतिः प्रतिपादं भवति । लक्षणं—

'न न म य य युतेयं मालिनी भोगिलोकैः ।'

नगणः नगणः मगणः यगणः यगणः - - - , - - - ,
ᴗᴗᴗ —ᴗᴗ —ᴗᴗ

यथा—

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एषः न्यस्यते वारयैनम् ॥

(वेणीसंहारम्–३.२६)

शिखरिणी—

अस्मिन् छन्दसि प्रतिपादं सप्तदशाक्षराणि वर्तन्ते । प्रतिपादं षष्ठाक्षरानन्तरं एकादशाक्षरानन्तरं च यतिर्भवति । लक्षणम्—

'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी ॥'

यगणः मगणः नगणः सगणः भगणः लघुः गुरुः
—ᴗᴗ ᴗᴗᴗ——— ——ᴗ ᴗ—— —ᴗ

यथा—

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया–
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥

(वेणीसंहारम्–३.११)

मन्दाक्रान्ता—

अस्मिन् छन्दसि प्रतिपादं सप्तदशाक्षराणि वर्तन्ते । प्रतिपादं चतुर्थ-दशमाक्षरानन्तरं यतिः भवति । लक्षणम्—

'मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम् ।'

मगणः भगणः नगणः तगणः तगणः गुरुः गुरुः
ऽऽऽ ऽ—— ———, ऽऽ—, ——ऽ——

यथा—

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्काः
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥

(वेणीसंहारम् ३.४)

वंशस्थम्:—

अस्मिन् छन्दसि प्रतिपादं द्वादशाक्षराणिव र्तन्ते । लक्षणम्—

'जतौ तु वंशस्थमुदीरितं जरौ ।'

जगणः तगणः जगणः रगणः
—ऽ— ऽऽ— —ऽ— ऽ—ऽ

यथा—

'भवन्ति नम्राः तरवः फलोद्गमैः
नवाम्बुभिः दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥'

(सुभाषितम्)

## कारकप्रकरणम्

कारकं नाम क्रियया साक्षात् सम्बद्धः पदार्थः । वाक्यप्रयुक्तधातुवाच्यक्रियया साक्षात् सम्बन्धवान् पदार्थः कारकमिति फलति । तच्च कारकं षोढा– (षट्प्रकारम् ।) यथा —

'कर्ता कर्म च करणं सम्प्रदानं तथैवं च ।
अपादानाधिकरणे इत्याहुः कारकाणि षट् ॥'

तत्र स्वतन्तः कर्ता । प्रकृतधातुवाच्यक्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता तृतीयाविभक्त्या बोध्यते । यथा—'रामेण रावणः हन्यते । अध्यापकैः व्याकरणं बोधितम् ।' इत्यादि ।

कर्तुरीप्सिततमं कर्म । कर्म द्वितीयाविभक्त्या बोध्यते । यथा-'बालकः फलं भक्षयति । जनाः ग्राम गच्छन्ति ।' इत्यादि ।

यदा कर्ता कर्म वा तिङ्कृत्तद्धितादिना अभिधीयते, तदा प्रथमा–विभक्तिरेव भवति । यथा–'रामो रावणं हन्ति । अध्यापकाः व्याकरणं बोधितवन्तः । बालकेन फलं भक्ष्यते । जनैः ग्रामो गम्यते ।' इत्यादि ॥

साधकतमं करणम् । मुख्यं साधनं करणं इत्यर्थः । करणं च तृतीयाविभक्त्या बोध्यते यथा 'रामो बाणेन रावणं अवधीत् । नरः कुठारेण वृक्षं छिनत्ति ।' इत्यादि ॥

दानस्य क्रियया यं अभिप्रैति सः सम्प्रदानम्। सम्प्रदानं चतुर्थी- विभक्त्या बोध्यते। यथा–'राजा दरिद्रेभ्यः अन्नं ददाति। छात्रेभ्यः पुस्तकानि वितीर्यन्ते।' इत्यादि।

ध्रुवमपाये अपादानम्। विश्लेषस्य अवधिभूतः पदार्थः अपादानम्, तत् पञ्चमीविभक्त्या बोध्यते। यथा–वृक्षात् पर्णं पतति। ग्रामात् ... आगतः।' इत्यादि॥

आधारोऽधिकरणम्। तच्च सप्तम्या बोध्यते। यथा–अन्नं ... वर्तते। भक्तस्य हृदये ईश्वरः तिष्ठति। इत्यादि।

षष्ठीविभक्तिः पदार्थयोः सम्बन्धं बोधयति प्रायः। रामस्य पुस्त- कम्। वनितायाः आभरणम् इत्यादि।

उपर्युक्तं सर्वं साधारणनियमान् अनुसृत्योक्तम्। तत्र तत्र विशेष- नियमैः अन्यत्रापि कारकसंज्ञा, तत्प्रयुक्ता च विभक्तिः प्रवर्तते। यथा 'स्पृहेरीप्सितः' इति सूत्रेण, स्पृहधातोः प्रयोगे ईप्सितस्य सम्प्रदानसंज्ञा अत एव तत्र चतुर्थीविभक्तिः भवति। यथा–बालिका पुष्पेभ्यः स्पृहयति ब्राह्मणो मोदकेभ्यः स्पृहयति। इत्यादि।

'भीत्रार्थानां भयहेतुः' इति सूत्रेण भयकारणस्य अपादानत्वम् अत एव पञ्चमीविभक्तिः। यथा नरः सिंहाद्बिभेति। अध्यापकात् छात्रस्य भयम्। शत्रोः मां त्रायस्व।' इत्यादि।

'अधीगगर्थदयेशांकर्मणि' इति सूत्रेण कर्मणि वाच्ये षष्ठीविभक्तिः भवति स्मृत्याद्यर्थकधातुप्रयोगे। यथा–'शिशुः मातुः स्मरति। अहं पितुः स्मरामि। राजा दरिद्राणां दयते।' इत्यादि॥

विभक्तिः द्विधा। कारकविभक्तिः, उपपदविभक्तिश्चेति। कारक- संज्ञापूर्विका कारकविभक्तिः। सा उपरि विवृता। उपपदविभक्तिर्नाम वाक्यप्रयुक्तं किञ्चित्पदं निमित्तीकृत्य कारकसंज्ञां विना प्रवर्तमाना विभक्तिः। यथा—

'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ।' इति सूत्रेण नम-आदिशब्दप्रयोगे तत्सम्बन्ध्यर्थवाचकात् चतुर्थी । यथा-देवाय नमः । प्रजाभ्यः स्वस्ति ।'

'अन्तरान्तरेण युक्ते' । अन्तरा-अन्तरेण इति शब्दाभ्यां योगे द्वितीया विभक्तिः भवति । यथा-'अन्तरेण त्वां मां च कमण्डलुः ।' आवयोः

योर्मध्ये कमण्धलुरस्तीत्यर्थः । 'अन्तरेण पुरुषप्रयत्नं न किञ्चिल्लभ्यते ।' पुरुषप्रयत्नं विना न किमपि लभ्यते इत्यर्थः । 'अन्तरा त्वां मां च गौस्ति-ष्ठति ।' आवयोर्मध्ये गौस्तिष्ठतीत्यर्थः ।

'सहयुक्तेऽप्रधाने ।' सहार्थेन युक्ते अप्रधाने तृतीया विभक्तिः भवति । यथा—मया सह राजा आगतः । त्वया सह कः गतः ? इत्यादि ।

एकत्रैव यदि कारकविभक्तिःउपपदविभक्तिश्च प्राप्नुतः, तर्हि तत्र कारकविभक्तिरेव भवति । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति नियमात् । यथा-देवान् नमस्करोति ।' अत्र 'कर्मणि द्वितीया' इति कारकविभक्तिः, नमःस्वस्तीत्यादिना उपपदविभक्तिश्च प्राप्नुतः । अतः कारकविभक्तिः (द्वितीया) एव भवति ॥

## अभ्यासः

१ कारकाणि कति ? तेषां नामानि लिखत ।

२ तृतीयाविभक्तिः कस्मिन्कस्मिन् अर्थे प्रवर्तते ?

३ दोषान् परिहृत्य इमानि वाक्यानि पुनर्लिखत—

(१) अहं त्वं पश्यामि

)२) रामः अयं पश्यति

(३). देवानां नमः

(४) पत्रं वृक्षेण पतितम् ।

(५) वृक्षो रामात् छिन्नः ।

(६) जनाः राक्षसेन भीताः

## अर्थग्रहणम्

यः पठति लिखति सततं
परिपृच्छति पण्डितान् उपाश्रयति ।
तस्य दिवाकरकिरणैः
नलिनीव विकास्यते बुद्धिः ॥

इदं पद्यं पठनादीनां प्रामुख्यं समर्थयत । पठनं नाम न केवल लिखितशब्दोच्चारणमात्रम् । अपि तु तदर्थग्रहणशक्तेः वृद्धये विस्तरशः पठनं, तदा तदा शब्दकोशावलोकनं च आवश्यकं भवति । न केवलं ग्रहणं पर्याप्तम्। बुद्धौ अर्थस्य धारणमपि अपेक्षितम् । तदानीं खलु तद्विषये कृतानां प्रश्नानां उत्तरं वक्तुं शक्यते । यदि शब्दार्थेषु ज्ञातेष्वपि वाक्यार्थो न ज्ञायेत, तर्हि परिणताः उपाश्रयणीयाः ।

अत्र पठनार्थं दत्ताः लेखाः सरलायां भाषायां लिखिताः । विषयाः सोद्देशं विशिष्टाः गृहीताः । एते प्रकटितेभ्यो विभिन्नेभ्यः पुस्तकेभ्यः सङ्गृहीताः । विद्यार्थिनः द्विः त्रिर्वा लेखान् सावधानं पठित्वा अधस्तात् दत्तान् प्रश्नात् उत्तरयेयुः ॥

## बालकर्मकरसमस्या

अस्माकं देशे सामाजिकानि आर्थिकानि च कष्टानि विद्याभ्यास-योग्यान् बालकान् (बालिकाश्च) धनार्जनार्थं विविधेषु कर्मसु प्रसभं योजयति। प्रशासनेन बालोद्योगो निषिद्धः शासनद्वारा, किन्तु तस्य शासनस्य सार्व-त्रिकः प्रयोगः अद्यावधि न शक्यो दृश्यते । नूतनं शासनं कर्तुमपि केन्द्रप्रशासनं समालोचयति इति ज्ञायते ।

धनार्जने मार्गान्तरमपश्यन्तौ पितरौ स्वयं शिशून् बलात्कारेण उद्योगेषु नियोजयतः इत्येषा दुःस्थितिः कर्णाटकराज्येऽपि दृष्टिगोचरीभवति । ग्रामेषु तु बालकर्मकराणां स्थितिः शोचनीया ॥

यदि शिशवः एतादृशात् कर्मजालात् विमोचनीयाः, तर्हि दारिद्र्य-निवारणे नितान्तं अवधेयं प्रशासनेन । प्रजानां अक्षरज्ञता च वर्धनीया । विद्यावन्तौ पितरौ स्वसन्ततेः विद्याऽभ्यासाय आद्यं अवधानं यच्छन्तीति सुस्पष्टम् । अतः अधिवयस्कानां विद्याभ्यासाय प्रशासनेन बहु प्रयतनीयम् । तदा पितरौ स्वशिशून् बाल्ये उद्योगेषु न नियोजयतः इति वक्तुं शक्यते । देशस्य कलङ्कायमानां इमां रूढिं यदि दूरीकुर्मः तर्हि सर्वेषां शुभं भवेत् ॥

## प्रश्नाः

(१) बाल-कर्मकर-समस्यायाः कारणं किम् ?

(२) बालकर्मकसमस्यापरिहाराय प्रशासनेन किं कृतम् ?

(३) बालकर्मकरसमस्यायाः परिहरणे अधिवयस्कानां विद्याभ्यासः कथं उपकरोति ।

(४) सम्यक् पठित्वा परिच्छेदं, तस्य उचितां शीर्षिकां सूचयत ॥

## वार्ताप्रसारः

इयं आकाशवाणी । प्रवाचकः मोहनदासः । मुख्यांशाः एवं सन्ति—

भारतदेशस्य प्रधानमन्त्री अद्य कर्णाटकराजधानीं समागत्य अनावृष्टि-परिणामान् ईक्षितवान् ।

कर्णाटकराज्यस्य मुख्यमन्त्री पादयात्रां कृत्वा अनावृष्टिपीडापरिहाराय धनसङ्ग्रहं अकरोत् ।

दक्षिणामेरिकादेशे विचित्रेण ज्वरेण मृतानां संख्या सहस्राधि[illegible] जाता ।

राष्ट्रे शान्ति ध्वंसितुं कस्मैचनापि अवकाशो न दीयते [illegible] केन्द्रगृहमन्त्री अद्य दिल्लीनगर्यां अघोषयत् ।

पश्चिमवङ्गराज्ये वाहनदुर्घटनायां पञ्चविंशतिः जनाः मृताः ।

एकदिवसक्रिकेट्स्पर्धायां भारतं विश्वविजयि जातम् ॥

**प्रश्नाः**

१ प्रधानमन्त्री कर्णाटकराज्यं प्रति किमर्थं आगतः ?

२ कर्णाटकराज्यमुख्यमन्त्री किमर्थं पादयात्रां कृतवान् ?

३ विचित्रेण ज्वरेण कुत्र कति जना मृताः ?

४ पश्चिमवङ्गराज्ये कीदृशी दुर्घटना जाता ? तत्र कति जनाः मृताः ?

५ अस्य परिच्छेदस्य उचितां शीर्षिकां सूचयत ॥

## निर्वाचनभाषणम्

महाजनाः ! भ्रातरः ! सहोदर्यश्च ! समग्रे देशे महा-निर्वाचनं शीघ्रं प्रचलिष्यतीति सर्वे भवन्तो जानन्ति । अस्माकं नूतन[illegible] पक्षः अस्मिन् महानिर्वाचने भागी भविष्यतीति भवन्तो विदन्ति । अस्मा[illegible] देशः चत्वारिंशद्वर्षेभ्यः प्राक् स्वातन्त्र्यं अलभत । गतेऽप्येतावति का[illegible] प्रजावर्गेण किं वा लब्धम् ? ख्यातैः पक्षैः किं वा साधितम् ? भ्रातरः किं कस्मिन्नपि ग्रामे नगरे वा जलार्थं जनानां प्रयासः अल्पीभूतः ? नैव [illegible] निदाघे अस्मिन् पुरे जलबिन्दुरपि दुर्लभो न किम् ? आहारधान्यानां [illegible] शाकादीनां वा मूल्यं किं न्यूनं जातम् ? नैव । कर्मकराः किं जीव[illegible] सुखं यापयितुं सौकर्यं प्राप्तवन्तः ? नैव ।

यद्यस्माकं पक्षः अधिकारं प्राप्स्यति, तर्हि भवतां योगक्षेमार्थं अहर्निशं वयं स्वार्थं विस्मृत्य परिश्राम्यामः। अतः सोदराः, सोदर्यः! बन्धवश्च अस्मत्पक्षाय मतानि दीयन्ताम्। भवतां आशीर्वादबलमेव अस्माकं श्रीरक्षा। सा शाश्वती भविष्यतीति दृढोऽस्माकं विश्वासः। सर्वान् नमस्कृत्य विरमामि। जयतु भारतदेशः॥

## प्रश्नाः

१ भारतदेशः कदा स्वातन्त्र्यमलभत?

२ स्वातन्त्र्यप्राप्त्यनन्तरमपि प्रजावर्गेण किं किं न लब्धमिति भाषणकारो वदति?

३ भाषणकारानुसारेण किमर्थं पक्षाय मतं देयम्?

४ प्रस्तुतस्य भाषणस्य उचितां शीर्षिकां सूचयत।

## चेर्नोबिल्-अणुकेन्द्रापघातः

अणुशक्तिः विश्वस्मिन् बहुत्र अधुना उत्पाद्यते, उपयुज्यते च। रष्यादेशस्य उक्रेनियाप्रदेशराजधानीं कीव्नगरीं उत्तरेण विद्यमाने चेर्नोबिल्-अणुविद्युत्केन्द्रे अचिरात् प्राक् अपघातः अभूत्, जीवहानिश्च तत्र संजाता। अस्मिन् अणुशक्त्युत्पादनयन्त्रं च भग्नम्।

अपघाते पीडितानां कष्टपरिहाराय साहाय्यं कल्पितम्। तथैव अपघातदुष्परिणामान् निवारयितुं च प्रयत्नाः कृताः। रष्यादेशस्य अणुकेन्द्रे इदंप्रथमतया अयं अपघातः जातः इति विज्ञायते। कीव् नगरात् शत-किलोमीटरदूरे स्थितस्य चेर्नोबिल्-अणुकेन्द्रस्य प्रथमं घटकं शतमानस्यास्य सप्तमे दशके आरब्धम्। अस्य विद्युदुत्पादनसामर्थ्यं विंशतिलक्षकिलो-वाट्परिमितम्॥

उक्रेनियागणराज्ये चत्वारि अणुकेन्द्राणि भवन्ति। अपघाते जातेऽपि अणुविकिरणं अधिकतया यथा न जायेत, तथा प्रयत्नः कृतः। अनेन अपघातेन यत् अणुविकिरणं प्रसृतं, तेन प्राणिनां मनुष्याणां वा काऽपि हानिः न जायत इति वदन्ति स्टाक्हविक्संस्थाया वैज्ञानिकाः। अणुविकिरणं, फिन्लेण्ड्-डेन्मार्क्-इत्यादि देशेष्वपि स्वल्पतया प्रसृतम् इत्यपि विदितं भवति ॥

## प्रश्नाः

A. उचितं उत्तरं चिनुत —

१ अपघातविषयींभूतं अणुविद्युत्केन्द्रं - - - वर्तते।
(उक्रेनियाप्रदेशे, कीवूनगरे, चेर्नोबिल्स्थले)

२ रष्या–अणुकेन्द्रे अपघातः– – --जातः।
(बहुवारं, एकवारं, कदाऽपि न)

३ चेर्नोबिल् अणुकेन्द्रं – – आरब्धम्।
(१९७० तमवर्षे, १०९० दशके, १९६० दशकस्य अन्तिमे भागे)

४ रष्यादेशस्य उक्रेनिया गणराज्ये – – अणुकेन्द्राणि सन्ति।
(त्रीणि, असंख्यानि, चत्वारि)

## पत्रलेखनम्

कुशलम्

कल्याणनगरं

दिनाङ्कः - - -

पूज्यपितृचरणसन्निधौ विनयानतस्य तनयस्य नमस्कारपूर्वि का विज्ञापना।

भवतामनुग्रहेण अहमत्र कुशली। भवन्तः सर्वेऽपि कुशलिन इति भवत्पत्रतो विदित्वा नितान्तं सन्तुष्यामि।

अत्र विद्यालये मदीया स्थितिः समीचीना वर्तते । गते मासचतुष्टये ये पाठाः गुरुभिः अध्यापिताः, तेषामवगमने किमपि कष्टं मया नानुभूयते । अत्रत्याः प्राध्यापकाः सर्वेऽपि स्वाध्यापनीयेषु विषयेषु निष्णाताः बोधनकुशलाश्च । अतः छात्रैः पाठावगमने क्लेशो नैवानुभूयते ।

छात्रावासे भोजनादिव्यवस्था तृप्तिकरी वर्तते । प्रातः दुग्धं दीयते, अल्पोपहारश्च । मध्याह्ने शालाविरामे छात्रावासं गत्वा भोजनं लभामहे । रात्रौ च पुनर्भोजनम् ॥

सायङ्काले क्रीडानां विषयेऽपि छात्राः आसक्तिं दर्शयन्ति । विविधानां क्रीडानां अङ्गणानि वर्तन्ते । मम तु पदकन्दुक (Football) क्रीडायां महत्यासक्तिः । तत्रैव आमानं विनोदयामि ।

शीघ्रं षाण्मासिकी परीक्षा भविष्यति । तस्यै परीक्षायै अध्ययनं प्रवर्तते । परीक्षानन्तरं निवर्तिष्ये भवतां दर्शनभाग्यं लब्धुम् ।

मदीयाः प्रणामाः मातृपादानां सन्निधये, अग्रजाय च निवेद्याः । अज्ञस्य मे लेखने स्थिताः दोषाः कृपया क्षन्तव्याः

इति नमोवाकैस्साकं

निवेदयति

आशीर्वादाकांक्षी

देवपुरग्रामः

दिनाङ्कः. . .

सन्मान्य· मुख्यमन्त्री

कर्नाटकराज्यम्

सम्मान्य मुख्यमन्त्रिमहाशय !

मसूरुमण्डलस्थस्य देवपुराख्यस्य ग्रामस्य निवासिनो वयं भवत्स-विधे वन्दनापूर्वं किञ्चिन्निवेदयितुमिच्छामः ।

विदितमेवैनत् प्रशासनेन यद् देवपुरग्रामः अतितमां दुरवस्थायां विद्यते इति । यद्यपि अस्य ग्रामस्य जनसंख्या सहस्राधिका, तथापि अत्र एकाऽपि पाठशाला नास्ति । अस्य ग्रामस्य बाला अद्य विद्यागन्धशून्याः विद्यन्ते ।

कर्नाटकराज्यप्रशासनं शीघ्रं देवपुरग्रामे पूर्णरूपां प्राथमिकशालां प्रारभताम्, यस्यां चत्वार उपाध्याया भवेयुः इति साग्रहं सविनयं च वयं निवेदयामः ।

देवपुरग्रामे मनुष्यचिकित्सालयोऽपि नास्ति । अतोऽस्मिन् ग्रामे मनुष्यचिकित्सालयं आरब्धुं कर्नाटकराज्यसर्वकारं प्रार्थयामहे ।

देवपुरग्रामः सम्पर्कशून्य इव प्रतिभाति । उत्तममार्गाभावात् राज्य-सर्वकारस्य वाहनानि अत्र नायान्ति । अतो महत् कष्टं अनुभूयते ग्राम-स्थैर्जनैः ग्रामान्तरं गन्तुम् । अतः देवपुरमार्गं उत्तमीकृत्य राज्यवाहन-निगमस्य वाहनानि यथा आगच्छेयुः तथा सौकर्यं प्रकल्पनीयम् इति च कर्नाटकराज्यसर्वकारस्य सन्निधौ अस्माकं अभ्यर्थना ।

एतेषु विषयेषु पृथक्तया विद्यामन्त्रिणे, आरोग्यमन्त्रिणे, परिवहनम-न्त्रिणे च अभ्यर्थनापत्राणि समर्पितानि । मान्यः अत्रभवान् मुख्यमन्त्री करुणया तान् प्रचोद्य, उपर्युक्तानि कार्याणि यथा शीघ्रसिद्धानि भवेयुः, तथा आचरतु इति पुनः पुनः सविनयं निवेदयामः ।

इति

देवपुरग्रामस्थाः

## सखीं प्रति सख्याः पत्रम्

अयि प्रियसखि

अत्राहं कुशलिनी । तत्र त्वदीयानां च बन्धूनां कुशलं सम्भावयामि । शालायां मम विद्याप्रगतिः साधारणी । सम्प्रति मदीयस्य लेखस्य उद्देशस्तु मया कृतस्य प्रवासस्य वर्णना एव ।

अस्माकं शालायाः विद्यार्थिनां प्रवासः हळेबीडु बेलूरु प्रदेशे व्यवस्थापितः आसीत् । एकदिनावधिः लघुः प्रवासः । प्रातरेव सर्वे वयं प्रस्थिताः । दैवात् वाहनं च निर्बाधं प्राचलत् । प्रातः सूर्यस्य अतीक्ष्णातपे मार्गस्य उभयोः पार्श्वयोः सस्यानि मृदुना पवनेन वीज्यमानानि नृत्यन्तीवासन् । मध्याह्ने वयं वेलापुरीं (बेलूरु) प्राप्ताः । पाणिपादं प्रक्षाल्य प्रविष्टाश्च देवालयम् ।

वेलापुर्याः देवालयस्य वैभवं द्रष्टुं द्वे चक्षुषी नालम् । शिल्पिवर्यस्य जक्कणाचार्यस्य हस्ते शिलाऽपि नवनीतायते स्म इति भावयामि । एकैकाऽपि प्रतिमा हृदयं आकर्षति । एतादृशं सौष्ठवं एतादृशं सौन्दर्यं च क्वान्यत्र दृश्येत ? देवालयस्य भित्तिषु स्थिताः देवताः सजीवा इव, अद्यापि युद्धसंनद्धा इव विद्योतन्ते । अन्तश्च गर्भाङ्कणे भगवान् चन्नकेशवो विराजते । तत्पुरस्ताच्च मनोज्ञं नाट्यमण्डपं विराजते । अद्यापि तत्र महाराज्ञी शान्तला नाट्योचितं पदविन्यासं कुर्वाणा सर्वान् विस्मृतात्मनः विदधाति किम् ? इति मन्मानसे सन्देहः प्रादुरभूत ॥

सखि ! किं बहुना ? अस्य देवालयस्य दर्शनेन जातं आनन्दं वर्णयितुं शब्दाः अशक्ताः । अनुभवमात्रवेद्यः अनिर्वचनीयः सोऽयमानन्दः इति वक्तव्यम् ।

होय्सळसाम्राज्यं नास्त्यधुना, चक्रवर्ती विष्णुवर्धनोऽपि न वर्तते । पट्टमहादेवी शान्तलाऽपि न विद्यते । तथापि तेषां कीर्तिः अमरा ।

बेलूरुनगरस्य समीप एव हळेबीडुग्रामः वर्तते । अत्र शिवदेवालयो विराजते । होय्सळसाम्राज्ये मतसहिष्णुतायाः सर्वधर्मसमानतायाः, परस्परगौरवभावनायाश्च सङ्केतायन्ते देवालयाः इत्यहं प्रत्येमि । शान्तला जैनमतानुयायिनी, तस्याः माता शिवभक्ता । तस्याः पतिः वैष्णवो बभूव ।

सखि ! एतावदेव ब्रवीमि । यदा एतादृशं क्षेत्रं द्रष्टुं अवकाशो लभ्यते, तदा तं सफलीकुरुष्व ।

यदि कोऽपि विशेषो भवेत्, तर्हि मा विस्मर पत्रं लेखितुम् ॥

इति

त्वदीया—

मोहनः

पदवी द्वितीयकक्ष्या

राष्ट्रीयविद्यालयः

बेङ्गबूरु— इत्यतः—

श्री चन्द्रशेखरः

मरिमल्लप्पविद्यालयः

पदवीपूर्वद्वितीयकक्ष्या

मैसूरु— इत्यस्मै—

बेङ्गळूरुनगरम्

दिनाङ्कः . . . .

प्रियमित्र !

अत्राहं कुशली, भवतश्च सर्वविधं कुशलं सम्भावयामि । अस्माकं विद्यालये सर्वेषु विषयेषु पाठाः सम्यक् प्रवर्तन्ते । ऋते आङ्ग्लभाषायाः । तत्र कारणं किमितिचेत् दुर्दैवात् तद्विषये अध्यापकानां नियुक्तिः विलम्बिता । पुस्तकानि च अत्र न लभ्यन्ते ।

सम्प्रति अहं एकं साहाय्यं याचे यदि मैसूरुनगरे अस्मत्कक्ष्यायाः आङ्ग्लपुस्तकानि लभ्यन्ते, तर्हि तानि क्रीत्वा मह्यं प्रेषय । अहं तन्मूल्यं शीघ्रं प्रेषयिष्यामि ।

अपि च यदि तव अध्यापकैः प्रश्नोत्तरमालिका एतद्विषये लेखिता, तर्हि कृपया तस्याः अपि प्रतिलिपिः (xerox) द्वारा कारयित्वा प्रेष्यताम् । एतदर्थं अहं तव नितान्तं कृतज्ञः स्थास्यामि । यदि त्वं किमपि इतः प्रेष्यमाणं अपेक्षसे, तर्हि ज्ञापय, अहं तद्विषये अवधानं दास्यामि ।

आवयोः मित्रैभ्यः सर्वेभ्यः मम नमस्काराः निवेदनीयाः ।

इति

त्वदीयः—मोहनः

## अभ्यासः

१ दिनत्रयस्य विरामं प्रार्थ्य विद्यालयस्य प्रांशुपालाय पत्रमेकं लिखत ।

२ भवत्कृतं प्रवासं वर्णयित्वा मित्राय पत्रमेकं लिखत ।

३ भवन्नगरस्य वैशिष्ट्यं वर्णयित्वा, सुहृदे आह्वानं दत्त्वा पत्रमेकं लिखत ॥

## अनुवादभागः

### अनुवादे अवधेयाः अंशाः ।

वाक्ये वर्तमानानां प्रत्येकपदानां केवलं अनुवादेनैव वाक्यस्य आशयः सम्पूर्णतया न गृह्यते । अतः वाक्यस्य आशयोऽपि ज्ञातव्यः । तदनन्तरं अनुवादः कर्तव्यः ।

अ) प्रथमतः वाक्यं कर्तरि–प्रयोगे वर्तते वा ? कर्मणि-प्रयोगे वर्तते वा ? इति ज्ञातव्यम् । तदनुगुणतया परिवर्तनं करणीयम् । अस्मिन् विषये तत्तद्भाषामर्यादाऽपि अवधेया । यतः कन्नडभाषायां प्रायः कर्तरि-प्रयोगः एव अधिकः । किन्तु संस्कृतभाषायां कर्मणि-प्रयोगा अधिकाः ।

आ) विशेष्य-विशेषणभावनियमः अवश्यं ज्ञातव्यः । सः नियमः एवं निरूपितोऽस्ति विशेष्यस्य लिङ्ग–वचन–विभक्ति च विशेषणं सर्वथा अनुसरति । अयं नियमः स्मरणसौलभ्याय श्लोकरूपे एवं वर्तते—

यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य ।
तल्लिङ्गं तद्वचनं सा च विभक्तिर्विशेषणस्यापि ॥

उदाहरणम् —

एकः श्वेतः अश्वः शीघ्रं धावति ।
एका श्वेता माला सम्यक् शोभते ।
एकं श्वेतं फलं तत्र अस्ति ।

एतेषु त्रिषु वाक्येषु अश्वः, माला, फलम् इति भिन्नलिङ्ग विशेष्यपदानि वर्तन्ते । अतः तद्विशेषणानि गुणवाचकसंख्यावाचकपदान्यपि तस्मिन्नेव लिङ्गे तस्यामेव विभक्तौ प्रयोक्तव्यानि । विशेषणं प्रायः विशेष्यस्य पूर्वमेव भवति ।

उदा—रक्तं वस्त्रम्

इ) संस्कृतभाषान्तरकार्ये पदानां लिङ्गज्ञानं अत्यावश्यकम् । संस्कृते शब्दानां लिङ्गज्ञानं कोषाणां साहाय्येन साहित्यव्याकरणाध्ययनेन ज्ञातुं शक्यम् । एकवस्तुवाचकशब्द एव भिन्नलिङ्गको भवति । तत्र अर्थान्तरं नास्ति ।

यथा—

तटः (पुं) तटी (स्त्री) तटम् (न)

सङ्गरः (पुं) आजिः (स्त्री) युद्धम् (न)

ई) क्रियाविशेषणं सर्वत्र नपुंसकलिङ्गे एव वर्तते ।

यथा—

रामः शीघ्रं गच्छति

अश्वः मन्दं गच्छति

उ) तिङन्तरूपाणां अपरिज्ञाने, तेषां स्थाने कृदन्तपदानि प्रयोक्तुं शक्यन्ते ।

रामः वनं जगाम ।

रामः वनं गतवान् ।

सीता वनं गतवती ।

ऊ) कर्तरिप्रयोगे क्रियापदं कर्त्रा सह अन्वेति ।

यथा—

बालाः पाठं पठन्ति ।

बालः पाठान् पठति ।

ऋ) कर्मणिप्रयोगे क्रियापदं कर्मपदस्य पुरुषवचने अनुसरति ।

बालैः पाठः पठ्यते ।

बालैः पाठाः पठ्यन्ते ।

ॠ) यदि धातुः अकर्मकः तदा भावे प्रयोगे क्रियापदं केवलं एकवचने एव वर्तते ।

सः हसति — तेन हस्यते ।
ते हसन्ति — तैः हस्यते ।

ए) संस्कृते वाक्यान्तर्गतपदानां स्थलव्यत्ययेन अर्थव्यत्यासो न भवति ।

यथा—

विद्या विनयं ददाति ।
विनयं ददाति विद्या ।
ददाति विद्या विनयम् ।

ऐ) च, वा, तु, इत्यादयः कदापि वाक्यस्य आरम्भे न प्रयोक्तव्याः । किन्तु सम्बन्धबोधक – समुच्चयबोधकाव्ययानि वाक्यारम्भे न दोषाय भवति ।

यथा—

यावत् स प्रष्टुं गच्छति तावत् पलायितः ।
यथा रूपं तथा गुणः ।

ओ) विस्मयादि बोधकाः शब्दाः प्रायः वाक्यस्य आदौ प्रयुज्यन्ते ।

यथा—

हा, हतोऽस्मि !
भो सभ्याः, इदं शृणुत ।

---

# PASSAGES FOR TRANSLATION

**Tranlate into Sanskrit:**

A hungry wolf once pursued a lamb. The lamb quickly fled and entered into a temple for refuge. The wolf could not enter into the temple as it was afraid of the priests. Standing in front of the temple, the wolf called out to the lamb and said in a sympathetic voice, "come out soon an we will both go out as friends into the forest, or else the p iests will catch you and slay you as an offering in sacrifice". The lamb replied, "It would be better to be sacrified in the temple than to be eaten by you. I will never come out of this temple". The wolf, after waiting for some time, went away disappointed.

An old man was taking great efforts in planting mango trees in his garden. A young man who saw him ridiculed him and said "How vain are these efforts of yours! You are very old and certainly will not live to taste the fruits of these trees". The old man calmly raised his eyes and, looking up at the young man, said, "Dear lad, you have put a proper question. Some one, before I was born, had planted these great fruit trees in the garden and I am eating their sweet fruits. I now plant these trees so that young men like yon may eat their fruits when I am dead". On hearing this, the boy was ashamed of his rudeness and praised the good sense of the old man.

We enjoy the benefits of the service of others and it is our duty to work for the good of others in our turn.

A brahmin named Bhargava began to perform penance on the bank of the Ganges, with a view to acquire learning. Indra appeared before him in disguise to dissuade him from penance. He took a handful of sand from the bank and threw it into the water in his presence. Bhargava asked him what he was doing. Indra replied, "I am building a bridge on the Ganges for the people to cross over". Then Bhargava said, "What a great folly this is! Can you build a bridge with sand ?" Indra replied, "How can you then acquire knowledge by penance ?" Being filled with shame, Bhargava then took to learning.

There was a blind man who was trapped inside a fort. He wanted desperately to get out. One day hee learned there was a door that would allow him to escape Since he was bhind, he had to walk slowly round the fort touching its walls in search of the door. Just as he was nearing the gate, he felt his body itching. So he became absorbed in scratching his body and forgot his search. By the time the itching had gone he passed the door and had to start all over again.

An ignorant man is likewise blind.

Once upon a time Lord Buddha was abused by a certain person. After listening to him for a while. Buddha asked, "My son, if a person to whom a present is offered declines it, to whom would it belong ?" The man replied, "To him, of course, who has offered it". Lord Buddha said, "Well, my son, I decline to accept your abuse, so that you will keep it with yourself" Humbled by this reply, the man silently went away.

An atheist used to meet frequently a friend who was a theist. Each had regard for the other and looked upon each other as sincere friends. The atheist, however, said to the theist one day, "Well, for God's sake what have you not done? You have given up all the pleasures and comforts of life". In reply the theist said to the atheist, "My sacrifice is nothing when compared with yours. You have renounced the Lord, the creator of the universe. Your sacrifice is greater han mine''.

ಸಂಸ್ಕೃತಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ

ಒಂದು ಸಲ ರಾಜನೊಬ್ಬನು ಸೆರೆಮನೆಯನ್ನು ಪರೀಕ್ಷಿಸಬೇಕೆಂದು ಹೊರಟನು. ಅಲ್ಲಿ ಐದು ಜನ ಖೈದಿಗಳಿದ್ದರು. ದೊರೆ ಅವರನ್ನು ಪ್ರಶ್ನಿಸಿದನು. 'ನೀವೇಕೆ ಸೆರೆಮನೆಯಲ್ಲಿ ಬಂಧಿತರಾಗಿದ್ದೀರಿ" ಎಂದು. ಅವರಲ್ಲಿ ನಾಲ್ಕು ಜನ "ಪ್ರಭು, ನಾವು ಯಾವ ತಪ್ಪನ್ನೂ ಮಾಡಿಲ್ಲ; ಆದರೂ ಇಲ್ಲಿ ಬಂಧಿತರಾಗಿದ್ದೇವೆ" ಎಂದರು. ಐದನೆಯ ಖೈದಿಯು ಮಾತ್ರ 'ಕ್ಷಮಿಸು ಪ್ರಭು, ನಾನು ಸ್ವಲ್ಪ ಹಣವನ್ನು ಕದ್ದೆ ; ಆ ತಪ್ಪಿಗಾಗಿ ನಾನು ಶಿಕ್ಷೆ ಹೊಂದಿದ್ದೇನೆ" ಎಂದನು. ದೊರೆಯು ಸಂತೋಷದಿಂದ ನಿಜ, ನೀನು ಅಪರಾಧಿ. ಈ ನಾಲ್ಕು ಜನ ನಿರಪರಾಧಿಗಳು ; ಇವರೊಡನೆ ಇರಲು ನೀನು ಅರ್ಹನಲ್ಲ ಎಂದು ಹೇಳಿ ಐದನೆಯ ಖೈದಿಯನ್ನು ಕಾರಾಗೃಹದಿಂದ ಬಿಡಿಸಿದನು.

* * *

ಒಬ್ಬ ದಡ್ಡ ರಾಜನಿಗೆ ಒಬ್ಬ ಮಗಳಿದ್ದಳು ; ಅವಳನ್ನು ಬೇಗ ಬೆಳೆಸಬೇಕೆಂದು ಅವನಿಗೆ ಆಸೆಯಾಗಿ ವೈದ್ಯರಿಗೆ ಹೇಳಿ ಕಳುಹಿಸಿದನು. ಅವರು 'ಮಹಾರಾಜ ಇದಕ್ಕೆ ಔಷಧಿಯನ್ನು ದೂರದೇಶದಿಂದ ತರಿಸಬೇಕು ; ಅಲ್ಲಿಯವರೆಗೆ ಇವಳು - ನಿನಗೆ ಕಣ್ಮರೆಯಾಗಿರಬೇಕು ; ಇದು ಚಿಕಿತ್ಸೆಯ ಕ್ರಮ' ಎಂದು ಅವಳನ್ನು ಕೆಲವು ವರ್ಷ ಅವನು ನೋಡದಂತೆ ಇಟ್ಟರು. ಅಷ್ಟು ಹೊತ್ತಿಗೆ ಅವಳು ಯೌವನದಿಂದ ಬೆಳೆದು ಮೈಕೈ ತುಂಬಿಕೊಂಡಳು. ಇದೆಲ್ಲ ಔಷಧದ ಪ್ರಭಾವವೆಂದು ನಂಬಿ ಅವರಿಗೆ ಸನ್ಮಾನ ಮಾಡಿದನು.

ಹಿಂದೆ ಉಜ್ಜಯಿನಿಯಲ್ಲಿ ಪುಣ್ಯಸೇನನೆಂಬ ರಾಜನಿದ್ದನು. ಒಂದು ಸಾರಿ ಅವನನ್ನು ಬಲಿಷ್ಠನಾದ ಶತ್ರುರಾಜನು ಮುತ್ತಿದನು. ಅವನನ್ನು ಜಯಿಸುವುದು ಅಸಾಧ್ಯವಾದದ್ದರಿಂದ ಬುದ್ಧಿವಂತರಾದ ಮಂತ್ರಿಗಳು ತಮ್ಮ ರಾಜನು ಸತ್ತುಹೋದ ನೆಂದು ಪ್ರವಾದವನ್ನು ಹರಡಿಸಿದರು. ಅವನನ್ನು ಬಚ್ಚಿಟ್ಟು ಯಾವುದೋ ಹೆಣವನು ರಾಜ ಮರ್ಯಾದೆಯಿಂದ ಸುಟ್ಟರು; ಆಮೇಲೆ 'ಈಗ ನಮ್ಮ ದೇಶಕ್ಕೆ ರಾಜನಿಲ್ಲವಾದ್ದ ರಿಂದ ನೀನೇ ರಾಜನಾಗು' ಎಂದು ದೂತರ ಮೂಲಕ ಶತ್ರುರಾಜನಿಗೆ ಹೇಳಿಕಳುಹಿಸಿ ದರು. ಅವನು ಆಗಲೆಂದನು. ಸೇನಾ ಶಿಬಿರವು ತೆಗೆದು ಸೇನೆಯು ಚದುರಿತು. ಆಮೇಲೆ ಪುಣ್ಯಸೇನನನ್ನು ಹೊರಪಡಿಸಿ ತಮ್ಮ ಸೈನ್ಯದಿಂದ ಆ ಶತ್ರುವನ್ನು ಸಂಹರಿಸಿದರು.

ಸ್ವರ್ಣಪುರಿ ಎಂಬ ಹಳ್ಳಿಯಲ್ಲಿ ಮಾಧವನೆಂಬುವನು ವಾಸಿಸುತ್ತಿದ್ದನು. ಅವನ ಪತ್ನಿಯು ಬಹಳಕಾಲದಿಂದ ತನ್ನ ಮಗನಂತೆ ಪೋಷಿಸಿಕೊಂಡು ಬಂದಿದ್ದ ಮುಂಗುಸಿ ಯನ್ನು ತನ್ನ ಮಗುವಿನ ರಕ್ಷಣೆಗೋಸ್ಕರ ಬಿಟ್ಟು ಒಮ್ಮೆ ಸ್ನಾನಕ್ಕೆ ತೆರಳಿದಳು. ಮಾಧವನೂ ಸಹ ಹಣ ಸಂಪಾದಿಸಲು ಹೊರಗಡೆ ಹೋಗಿದ್ದನು. ಅಷ್ಟರಲ್ಲಿ ತೊಟ್ಟಿಲಲ್ಲಿ ಮಲಗಿದ್ದ ಬಾಲಕನ ಹತ್ತಿರಕ್ಕೆ ಬರುತ್ತಿದ್ದ ಹಾವನ್ನು ನೋಡಿ ಮುಂಗುಸಿಯು ಕೂಡಲೆ ನೆಗೆದು ಅದನ್ನು ಕೊಂದಿತು. ನದಿಯಿಂದ ಹಿಂತಿರುಗಿ ಬರುತ್ತಿದ್ದ ಮನೆಯೊಡತಿಯನ್ನು ಕಂಡು, ರಕ್ತದಿಂದ ಕೆಂಪಾಗಿದ್ದ ಆ ಮುಂಗುಸಿಯು ಅವಳ ಹತ್ತಿರಕ್ಕೆ ಹೋಯಿತು. ಅದನ್ನು ಕಂಡು 'ನಿಜವಾಗಿಯೂ ಇದೇ ನನ್ನ ಮಗುವನ್ನು ಸಾಯಿಸಿದೆ; ಆದ್ದರಿಂದಲೇ ಇದರ ಶರೀರವು ರಕ್ತದಿಂದ ಲೇಪಿತವಾಗಿದೆ' ಎಂದು ನಿಶ್ಚಯಿಸಿದಳು. ಕೋಪದಿಂದ ಅದರ ಮೇಲೆ ತುಂಬಿದ ಕೊಡವನು ಎಸೆದಳು. ಅದು ಸತ್ತುಹೋಯಿತು. ಮನೆಗೆ ಹಿಂತಿರುಗಿ ಬಂದು ಅಲ್ಲಿ ಸುಖವಾಗಿ ಮಲಗಿದ್ದ ಬಾಲಕನನ್ನು, ಅದರ ಸಮೀಪದಲ್ಲೇ ಸತ್ತಿದ್ದ ಹಾವನ್ನು ನೋಡಿ ತನ್ನ ಅವಿವೇಕವನ್ನು ಮುಂಗುಸಿಯ ಉಪಕಾರವನ್ನೂ ಚಿಂತಿಸಿ ಅತಿಯಾಗಿ ದುಃಖಿಸಿದಳು.

ಹಸ್ತಿನಾಪುರದಲ್ಲಿ ವಿಲಾಸನೆಂಬ ಹೆಸರಿನ ಅಗಸನು ವಾಸಿಸುತ್ತಿದ್ದನು. ಅವನ ಕತ್ತೆಯು ಬಹಳ ಕೃಶವಾಯಿತು. ಅದನ್ನು ಬಲಿಷ್ಠಗೊಳಿಸಬೇಕೆಂದು ಆ ಅಗಸನು ಆ ಕತ್ತೆಯ ಮೇಲೆ ಹುಲಿಯ ಚರ್ಮವನ್ನು ಹೊದಿಸಿ ಬೇರೆಯವರ ಹೊಲದಲ್ಲಿ ಮೇಯಲು ಬಿಟ್ಟುಬಿಟ್ಟನು. ಆ ಕತ್ತೆಯು ಸುಖವಾಗಿ ತಿಂದು ಪುಷ್ಟವಾಯಿತು. ಕೆಲವು ಹೊಲದ ಒಡೆಯರು ಅದನ್ನು ನಿಜವಾದ ಹುಲಿಯೆಂದೇ ತಿಳಿದು ಓಡಿ ಹೋಗುತ್ತಿದ್ದರು. ಆದರೆ ಬುದ್ಧಿವಂತನಾದ ವ್ಯಕ್ತಿಯೊಬ್ಬನು, ಆ ಪ್ರಾಣಿಯ ನಿಜ ಸ್ವರೂಪದ ಬಗೆಗೆ ಸಂಶಯ ತಾಳಿದನು. ಒಮ್ಮೆ ತಾನೂ ಕತ್ತೆಯ ಚರ್ಮವನ್ನು ಹೊದ್ದುಕೊಂಡು ತನ್ನ ಹೊಲಕ್ಕೆ ಹೋದನು. ಹುಲಿಯ ಚರ್ಮವನ್ನು ಹೊದ್ದಿದ್ದ ಕತ್ತೆಯು, ಹೊಲಕ್ಕೆ ತನ್ನ ಜೊತೆಯವನೊಬ್ಬ ಬಂದಿದ್ದಾನೆಂದು ಆಲೋಚಿಸಿ

ಸಂತೋಷದಿಂದ ಅರಚಿ ಅವನೆಡೆಗೆ ಧಾವಿಸಿತು. ಅನಂತರ ಈ ಸತ್ಯವನ್ನು ತಿಳಿದ ಹೊಲದ ಯಜಮಾನರು ಅದನ್ನು ಕೊಂದುಬಿಟ್ಟರು.

ಒಂದು ಕರಡಿ ಹಾಗೂ ಮನುಷ್ಯ ಒಮ್ಮೆ ಗೆಳೆಯರಾದರು. ಅವರಿಬ್ಬರೂ ಒಂದು ಬಾರಿ ಕಾಡಿನಲ್ಲಿ ಸಂಚರಿಸುತ್ತಿದ್ದರು. ಮಧ್ಯಾಹ್ನದ ವೇಳೆಯಲ್ಲಿ ಒಂದು ಮರದ ನೆರಳಿನಲ್ಲಿ ಮನುಷ್ಯನು ವಿಶ್ರಾಂತಿಗಾಗಿ ಕುಳಿತುಕೊಂಡನು. ಆಯಾಸದಿಂದ ಆತನಿಗೆ ನಿದ್ರೆ ಬರುತ್ತಿತ್ತು. ಆದರೆ ಒಂದು ನೊಣವು ಪದೇ ಪದೇ ಆತನ ಮುಖದ ಮೇಲೆ ಬಂದು ಕುಳಿತುಕೊಳ್ಳುತ್ತಿದ್ದುದರಿಂದ ನಿದ್ರೆ ಮಾಡಲಾಗಲಿಲ್ಲ. ಇದನ್ನು ಕಂಡ ಕರಡಿಯು "ನನ್ನ ಗೆಳೆಯನಾದ ಈತನಿಗೆ ನಾನು ಸಹಾಯ ಮಾಡಬೇಕು, ತೊಂದರೆ ಕೊಡುತ್ತಿರುವ ಈ ನೊಣವನ್ನು ಸಾಯಿಸಬೇಕು' ಎಂದು ಆಲೋಚಿಸಿತು. ಅನಂತರ ನೊಣವು ಕುಳಿತಾಗ ಅವನ ಮುಖದ ಮೇಲೆ ತನ್ನ ಅಗಲವಾದ ಕೈಯಿಂದ ಅಪ್ಪಳಿಸಿತು. ಈ ಹೊಡೆತ ನೊಣವನ್ನೇನೊ ಸಾಯಿಸಿತು, ಆದರೆ ಅದೇ ವೇಳೆಗೆ ಆತನ ಮುಖಕ್ಕೂ ಬಲವಾದ ಗಾಯವಾಗಿ ನೋವಾಯಿತು.

---

# ಸಂಸ್ಕೃತದಲ್ಲಿ ವಿಜ್ಞಾನ

ಸಂಸ್ಕೃತ ವಾಙ್ಮಯವು ಪ್ರಾಚೀನ ಭಾರತೀಯರ ಜನಜೀವನ, ಸಂಸ್ಕೃತಿ, ಮತ್ತು ಸಾಧನೆಗಳನ್ನು ತಿಳಿಸುತ್ತದೆ. ಸಂಸ್ಕೃತದಲ್ಲಿ ಸಹೃದಯರ ಹೃದಯಗಳಿಗೆ ಆನಂದ ನೀಡುವ ಶ್ರೇಷ್ಠವಾದ ಸಾಹಿತ್ಯವೂ, ಪಾರಲೌಕಿಕವಾದ ಆಧ್ಯಾತ್ಮಿಕ ವಿಶ್ಲೇಷಣೆಗಳೂ ಲೋಕಪ್ರಸಿದ್ಧವೇ ಆಗಿವೆ. ಆದರೆ ಸಂಸ್ಕೃತದಲ್ಲಿರುವ ಅಪಾರ ವೈಜ್ಞಾನಿಕ ಸಾಹಿತ್ಯ ರಾಶಿಯು ಇನ್ನೂ ಬಹುಪಾಲು ಗುಪ್ತವಾಗಿಯೇ ಇದೆ.

ಕ್ರಿ.ಶ. 12ನೇ ಶತಮಾನದವರೆಗೂ ಅವ್ಯಾಹತವಾಗಿ ಬೆಳೆದುಬಂದ ಭಾರತೀಯ ವಿಜ್ಞಾನ ಪರಂಪರೆಯು ವಿದೇಶೀಯರ ಆಕ್ರಮಣವೇ ಮೊದಲಾದ ಹಲವು ಕಾರಣ ಗಳಿಂದ ಕುಂಠಿತವಾಯಿತು. ಆ ಮೊದಲಿನ ಭಾರತೀಯರ ವೈಜ್ಞಾನಿಕ ಸಾಧನೆಯು ಪ್ರಪಂಚದ ವಿಜ್ಞಾನ ಲೋಕಕ್ಕೆ ಸಲ್ಲಿಸಲಾದ ವಿಶಿಷ್ಟವಾದ ಕಾಣಿಕೆಯಾಗಿದೆ. ಹಾಗೆಯೇ ಮಾತ್ರಕ್ಕೆ ನಾವು ಇಂದು ಕಾಣುವ ಅತ್ಯಂತ ಆಧುನಿಕವಾದ ವೈಜ್ಞಾನಿಕ ಸಿದ್ಧಿಗಳನ್ನೆಲ್ಲ ನಮ್ಮ ಪೂರ್ವಜರು ಸಾಧಿಸಿದ್ದರೆಂಬ ಭ್ರಮೆಯೂ ಸರಿಯಲ್ಲ. ಪ್ರಾಚೀನ ಭಾರತೀ ಯರಿಗೆ ವೈಜ್ಞಾನಿಕ ದೃಷ್ಟಿ ಇರಲಿಲ್ಲವೆಂಬ ಅಭಿಪ್ರಾಯವೂ ಅಸಾಧುವಾಗಿದೆ. ಈ ವಿಷಯದಲ್ಲಿ ವಸ್ತುನಿಷ್ಠವಾಗಿ ಅಧ್ಯಯನ ಮಾಡುವ ಆವಶ್ಯಕತೆ ಇದೆ.

ಈ ಪ್ರಬಂಧದಲ್ಲಿ 'ಪ್ರಾಚೀನ ಭೌತಿಕ ವಿಜ್ಞಾನ'ದ ಕೆಲವು ಗಣನೀಯ ಅಂಶ ಗಳನ್ನು ಮಾತ್ರ ಪರಿಗಣಿಸಲಾಗಿದ್ದು ಅವುಗಳನ್ನು ಆಧುನಿಕ ವಿಜ್ಞಾನವೂ ಪ್ರಯೋಗ ಗಳಿಂದ ಪರಿಶೀಲಿಸಬೇಕಾಗಿದೆ. ಶಿಲ್ಪಶಾಸ್ತ್ರ, ತಂತ್ರಜ್ಞಾನ, ಸಂಗೀತಶಾಸ್ತ್ರ, ಯೋಗ ಶಾಸ್ತ್ರ ಮುಂತಾದ ಕ್ಷೇತ್ರಗಳಲ್ಲಿ ಪ್ರಾಚೀನ ಭಾರತೀಯರು ಬಹು ವಿಶಿಷ್ಟವಾದ ಸಿದ್ಧಿ ಗಳನ್ನು ಪಡೆದಿದ್ದರು. ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿರುವ ಉನ್ನತ ವೈಜ್ಞಾನಿಕ ಸಾಧನೆಗಳ ವಿಶೇಷವಾದ ಅಧ್ಯಯನ ಇಂದು ಹಲವೆಡೆಗಳಲ್ಲಿ ನಡೆಯುತ್ತಿದ್ದು, ಇದೊಂದು ವಿಶಾಲ ವಾದ ಸಂಶೋಧನಾ ಕ್ಷೇತ್ರವಾಗಿದೆ. ಸಂಸ್ಕೃತವು 'ಕಂಪ್ಯೂಟರ್'ನ ಬಳಕೆಯಲ್ಲಿ ಅತ್ಯಂತ ಪ್ರಯೋಜನಕಾರಿ ಎಂದು ಪರಿಗಣಿತವಾಗಿದ್ದು, ಈ ದಿಶೆಯಲ್ಲಿ ಇತ್ತೀಚೆಗೆ ತೀವ್ರಗತಿಯ ಶೋಧನೆಗಳು ಸಾಗಿವೆ.

ಆದ್ದರಿಂದ ಇಂತಹ ಸಂಶೋಧನೆಗಳು ಯಶಸ್ವಿಯಾಗಬೇಕಾದಲ್ಲಿ ಸಂಸ್ಕೃತವನ್ನು ಆಳವಾಗಿ ಕಲಿತಿರುವ, ಆಧುನಿಕ ವಿಜ್ಞಾನವನ್ನು ತಿಳಿದಿರುವ ಮೇಧಾವಿಗಳು ತಯಾರಾ

ಬೇಕಾಗಿದೆ. ಅಂತಹ ಆಳವಾದ ಅಧ್ಯಯನಕ್ಕೆ ನಮ್ಮ ವಿದ್ಯಾರ್ಥಿಗಳನ್ನು ಪ್ರಚೋದಿಸುವುದೂ ಈ ಲೇಖನದ ಉದ್ದೇಶವಾಗಿದೆ. ಹೆಚ್ಚಿನ ಪ್ರಯೋಜನಕ್ಕಾಗಿ ಉಪಯುಕ್ತವಾದ ಗ್ರಂಥಗಳ ಪಟ್ಟಿಯನ್ನೂ ಕೊಟ್ಟಿದ್ದೇವೆ.

ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ಲಭ್ಯವಿರುವ ಅಪಾರವಾದ ವೈಜ್ಞಾನಿಕ ಸಾಹಿತ್ಯರಾಶಿಯ ಕೆಲವೇ ತುಣುಕುಗಳನ್ನು ಮಾತ್ರ ಇಲ್ಲಿ ಉದಾಹರಣೆಯ ರೂಪದಲ್ಲಿ ಕೊಡಲಾಗಿದೆ. ಕ್ರಮವಾಗಿ ಗಣಿತಶಾಸ್ತ್ರ ಮತ್ತದರ ವಿವಿಧ ಶಾಖೆಗಳು, ಖಗೋಳಶಾಸ್ತ್ರ, ಭೌತ ಶಾಸ್ತ್ರ, ರಸಶಾಸ್ತ್ರ, ಆಯುರ್ವೇದ, ಸಸ್ಯಶಾಸ್ತ್ರ ಮತ್ತು ಪ್ರಾಣಿಶಾಸ್ತ್ರ ಮೊದಲಾದ ವಿಜ್ಞಾನಪ್ರಕಾರಗಳ ಕೆಲವಂಶಗಳನ್ನು ಮಾತ್ರ ಇಲ್ಲಿ ಪರಿಗಣಿಸಲಾಗಿದೆ.

# संस्कृते विज्ञानम्

'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥'

भारतदेशः आपञ्चसहस्रवर्षेभ्यः ज्ञानविज्ञानयोः क्षेत्रमस्ति । क्रि.श. १२ शतकपर्यन्तं विज्ञानस्य गतिः अप्रतिहता आसीत् । परं पश्चात् वैदेशिकाः प्रचलमभियानं प्रारभन्त । तदा चिन्तनशीलतैव कुण्ठिताऽभूत्। अतः विज्ञानस्य अभिवृद्धिः प्रायः स्थगिता । परन्तु विज्ञानक्षेत्रे अस्माकं प्राचीनानां साधना प्रकृष्टा प्रतिभाति । अधुना विज्ञानक्षेत्रे भारतीयाः नातीव प्रगतिशीलाः इति केचन कथयेयुः । प्राचीने काले भारतदेश-वासिभिः विज्ञाने काऽपि प्रगतिः न साधिता इति केचन भावयेयुः। अतः अस्मिन् विषये किञ्चिद् वस्तुनिष्ठतया विचार्यते ।

क्रिस्तपूर्व सहस्रत्रयवर्षेभ्योऽपि प्राक् उत्तमा नागरिकता सिन्धु-नदीतीरे अभिवृद्धा आसीत् । तत्र श्रेष्ठानि नगराणि निर्मितान्यासन्। येषां निर्माणं वैज्ञानिकीं प्रगतिं विना न सम्भावयितुं शक्यम् । वेदकाले भारतीयाः अङ्कादिगणनासु खगोलपरिज्ञाने वैद्यशास्त्रे च प्रगतिं साधितवन्तः इति प्रतिभाति । वेदोत्तरकालिकेषु शुल्बादिसूत्रग्रन्थेषु रेखागणितस्य (ज्यामितेः) ज्ञानमपि प्रकर्षमाप्नोत् इति गोचरं भवति । लोहानां अयस्ताम्रस्वर्णादीनां परिशोधने च प्रावीण्यमासीदिति ज्ञायते ॥

वेदशुल्बादिग्रन्थाः विज्ञानस्य बोधनाय न प्रवृत्ताः, किन्तु ज्ञान-बोधनाय प्रवृत्तेषु तेषु तत्रतत्र तदानीन्तनस्य विज्ञानस्य प्रगतेः प्रतिफलनं गोचरीभवति । तत्रत्यानां परिकल्पनानां (Concepts) आधारेण अस्माभिः तास्ताः विज्ञानसिद्धयः ऊहनीयाः भवन्ति । तदुत्तरकाले विज्ञानस्य तासु तासु शाखासु अभिवृद्धासु तत्तद्विषये निष्कृष्टतया च ग्रन्थाः मेधाविभिः विरचिताः । उभयदृष्ट्याऽपि अस्माभिः विज्ञानपरम्परा वीक्षणीया ॥

---

# गणितशास्त्रम्

गणितं तावत् विज्ञानस्य मूलम् । अद्य समग्रे प्रपञ्चे उपयुज्यमाना: अङ्का (1, 2, 3 – –) शून्यं (०) दशमानपद्धतिश्च भारते वर्षे अन्वैष्यन्त। रोमन्पद्धत्या संख्यानां लेखने महत् कष्टं सकलैरनुभूयते स्म । अतः तत् त्यक्त्वा सर्वे देशाः भारतान्विष्टां पद्धतिमेव स्वीचक्रुः । इयं पद्धतिः अरबाणां द्वारा यूरोपं प्राप । अतः इमां 'अरबीया पद्धतिः'. 'अरबीयाः अङ्काः' इति केचन भ्रान्त्या व्यवहरन्ति ।

गणितशास्त्रग्रन्थकारेषु आर्यभटः (क्रि.श. पञ्चमशतकम्) वराहमिहिरः (षष्ठं शतकं) भास्करः (सप्तमशतकं) महावीरः (नवमशतकं) श्रीधरः (दशम-शतक) द्वितीयः भास्करः (द्वादशं शतकं) इत्यादयः गणनार्हाः ।

अङ्कगणितं, पाटीगणितमिति च Arithmetic इत्याख्यं शास्त्रं संस्कृते व्यवह्रियते । पाटीगणीतग्रन्थेषु आचार्यभास्करस्य लीलावती मूर्धन्या । तत्र दशगुणनया शतसहस्रादिसंख्यानां गणना कथं प्रवर्तत इति इत्थं सूचितम्—'एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदं अब्जं खर्वनिखर्वमहापद्मशङ्कवः तस्मात् । जलधिश्चान्तं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः । संख्यायाः स्थानानां व्यवहारार्थं कृता पूर्वैः ॥' १–२–३)

भास्कराचार्यः न केवलं गणितशास्त्रवित्, अपितु श्रेष्ठः कविरपि। अतः सः क्लिष्टाः गणितसमस्या अपि सरसया शैल्या प्रकृतिरम्यां दृश्यावलीं

उपवर्णयन् प्रस्तौति । एतेन छात्राणां मनसि कुतूहलं उत्पद्यते, समस्या परिहारे आसक्तिश्च जायते । एकं उदाहरणं अत्र दीयते—

'चक्रक्रौञ्चाकुलितसलिले क्वापि दृष्टं तडागे
तोयादूर्ध्वं कमलकलिकाग्रं वितस्तिप्रमाणम् ।
मन्दं मन्दं चलितमनिलेनाहतं हस्तयुग्मे
तस्मिन् मग्नं गणक कथय क्षिप्रमम्भःप्रमाणम् ॥'




OC = depth of water

Lotus bends down from A to B.

CA = 1/2 hastas

BC = 2 hastas.

Let OC be = x hastas.

AB is the arc of a circle with O as the centre,

$OB = OA$

$OB = OC + CA$

$(x+1/2)^2 = x^2 + 2^2$ ∵ OBC is a right angled triangle

∴ $x^2 + 2 \cdot x\, 1/2 + (1/2)^2 = x^2 + 2^2$ ∴ $x = 3\ 3/4$ hastas

बीजगणिते तु अनेकाव्यक्तपदात्मकानां समीकरणानां विश्लेषणं, कुट्टकवर्गप्रभृति चक्रवालानि च भारतीयानां वैशिष्ट्यम् । खगोलशास्त्रे बीजगणितस्य उपयोगः, बजिकसिद्धान्तानां रेखागणितीयं प्रदर्शनं चापि भारतीयानां प्रागल्भ्यं सूचयति । अव्यक्तपदस्य सूचनार्थं या. का. नी पी. लो इत्यादीनि अक्षराणि उपयुज्यन्ते ।

यावत्तावत् कालको नीलकोऽन्यो
वर्णः पीतो लोहितश्चैतदाद्याः
अव्यक्तानां कल्पिता मानसंज्ञाः
तत्संख्यानं कर्तुमाचार्यवर्यैः ॥

क्षेत्रमितौ (Geometry) वेदकालादेव 'शुल्बसूत्रग्रन्थाः भारते प्रचलिताः यज्ञवेदीनां निर्माणार्थं विभिन्नानामाकृतीनां क्षेत्रफलज्ञानं परिवर्तनं च आवश्यकमासीत् । अतः अस्मिन् शास्त्रे अतीव प्रौढविचाराः सन्ति । पैतागोरसोपज्ञं इति ऐरोप्याः यं सिद्धान्तं मन्यन्ते सः कात्यायनेन चैवं निरूपितः—

'दीर्घचतुरस्रस्याक्ष्णया रज्जुः पार्श्वमानी तिर्यङ्मानी च यत् पृथग्भूते कुरुतः तदुभयं करोति' । इति ।

एतदेव अनन्तरभवैः पण्डितैः सुलभरूपेण दत्तम्—

'जात्यत्रिभुजे भुजकोट्योर्वर्गयोगः कर्णवर्गसमः' इति ।

इदानीमपि सिद्धान्तः एषः पैतागोरसस्य नाम्ना परिगण्यते । अस्य 'शुल्बसिद्धान्तः' इति 'जात्यत्रिभुजसिद्धान्तः' इति वा युक्तं अभिधानम्, प्रागेव भारतीयैः अन्विष्टत्वात् ।

स्थिराङ्कस्य ' (पै) इत्यस्य मौल्यं आर्यभटेनैवं प्रतिपादितम्—

चतुरधिकं शतमष्टगुणं
द्वाषष्टिस्तथा सहस्राणाम् ।
अयुतद्वयस्य विष्कम्भस्य
आसन्नो वृत्तपरिणाहः ॥ इति ॥

(100+4)×8+62,000÷20,000=62,832÷20,000=3.1416

आधुनिकगणितप्रतिपाद्यमानादपि मौल्यात् निष्कृष्टतरं मौल्यं दत्त्वापि आर्यभटः तदपि 'आसन्नम्' इति ब्रवीति । सूक्ष्मतमदृष्टिः खलु सः ।

त्रिकोणमितौ (Trigonometry) उपयुज्यमानं सैन् (Sine) कोसैन् (Cosine) लागरितम् (Logoritham) इत्यादीनि क्रमशः 'शिञ्जिनी' 'कोटिशिञ्जिनी' 'लघुरिक्तादीनां' भ्रष्टरूपाणीति स्पष्टम् ।

वाचस्पतिः स्वीये न्यायशास्त्रग्रन्थे विश्लेषकरेखागणितस्य (co-ordinate Geometry) आचार्य भास्करो गोलाध्याये चलकलनस्य (calculus) च मूलविचारान् प्रस्तुत्य यूरोपीयपण्डिताभ्यां डेकार्टे-न्यूटनाभ्यां (Descartes Newton) प्रागेव एतदभिज्ञौ आस्ताम् ।

खगोलशास्त्रम्

खगोलशास्त्रे तावत् ऋग्वेदकालत एव भारतीयानां प्रतिभा विद्योतते ।

'सूर्यः पृथिव्याधारः' इति ऋषयः सम्यक् ददृशुः ।

,मित्रो दाधार पृथिवीमुत द्याम् ।'

(ऋक् ३.५९.१)

ग्रहणविषये अत्रिवंशजाः प्रथमे विद्वांसः आसन् ।

'यं वै सूर्यं स्वर्भानुः तमसाविध्यदासुरः ।

अत्रयस्तमन्वविन्दन् न ह्यन्ये अशक्नुवन् ॥

(ऋ. सं ५-४०-१)

चन्द्रस्य वृद्धिह्रासप्रकारं तत्प्रकाशमूलं च ऋषयो विदुः इत्यवगम्यते वक्ष्यमाणैः मन्त्रैः—

'नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।,
भागं देवेभ्यो विदधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥'

(ऋ.सं १०-८५-१७)

'चन्द्रमा अमावास्यायां आदित्यमनुप्रविशति . . . . आदित्याद्वै चन्द्रमा जायते ।' (ऐतरेयब्राह्मणं ४०५)

'सूर्यरश्मिश्चन्द्रमा गन्धर्वः ।'

(तैत्तिरीयसंहिता ३.४.७.१)

क्रिस्तीयपञ्चमे शतके आर्यभटः भुवो भ्रमणं प्रत्यपादयत्—

'प्राणेनैति कलां भूः ।' इति

तदनन्तरं वराहमिहिर-ब्रह्मगुप्तभास्कराचार्यादयः ज्योतिर्विज्ञानिनः शास्त्रमिदं वर्धयामासुः ॥

भौतशास्त्रम्

सैद्धान्तिकभौतशास्त्रस्य (Theorectical physics) विचाराः न्यायदर्शने सन्ति ।

कणादस्य वैशेषिकशास्त्रं तु परमाणुविषयनिरूपणे विशिष्यते एव

रसशास्त्रम्

रसशास्त्रे दशधिकानां ग्रन्थानां उल्लेखो लभ्यते । तेषु रसरत्नसमुच्चयः नागार्जुनस्य रसरत्नाकरः इत्येते ग्रन्थाः प्रसिद्धाः । शास्त्रस्यास्य नामैव पारदस्य संस्करणे अस्माकं पूर्वजानां नैपुण्यं प्रकटयति ।

देहलीनगरे कुतुबूमिनारस्य निकटे स्थितः विष्णुस्तम्भस्तात्रदायससंस्करणे प्राचीनभारतीयानां कौशलं अद्यापि प्रमाणयति । कानिचन अयःफलकशासनानि च अविकृतरूपेण स्थितानि अत्र प्रमाणम् ॥

आयुर्वेदः

आदुर्वेदस्तावत् अथर्ववेदस्य उपवेदत्वेन परिगणितः । तत्र आधुनिकस्य वैद्यशास्त्रस्य सर्वे मुख्यविभागाः अन्तर्गताः । अत्र चरकसुश्रुतौ विशिष्येते ।

चरकसंहितायां—कायचिकित्सा, सुश्रुतसंहितायां शल्यक्रिया (शस्त्रचिकित्सा), माधवनिदाने रोगनिदानम् (Diagnosis), नागार्जुनयोगशतके शतं औषधयोगाः वाग्भटस्य अष्टाङ्गहृदये आयुर्वेदस्य अष्टौ अङ्गानि च वर्णितानि ॥

अथर्ववेदे परश्शताः वनौषधयः श्रूयन्ते—

'रोहियसि रोहिण्यस्थ्नः छिन्नस्य रोहिणी ।
रोहयेदमरुन्धति ॥ (अथर्ववेदे ४–१२–१) इत्यादि ।

मदनपालनिघण्टुः वनस्पतीनां धातूनां च गुणधर्मान् सम्यङ् निरूप-
यति। महाराजस्य अशोकस्य काले एव, देशे तत्र तत्र सुसज्जिताः
चिकित्सालयाः स्थापिताः। छिन्नायाः मानवनासिकायाः स्थाने गोमृद्धि
संयोजयन्ति स्मेति क्रिस्तपूर्वकालीनस्य समाधेरुत्खननेन लब्धस्य
मानवास्थिपञ्जरस्य परामर्शात् विज्ञायते।

तथा च पतञ्जलेर्योगशास्त्रं मनस्स्वास्थ्यस्य सम्पादनाय मार्गं
दर्शयति। वृक्षायुर्वेदस्तु (Botany) अथर्ववेदे अग्निपुराणे, वराहमिहिरस्य
बृहत्संहितायां च सविस्तरं प्रस्तुतः। उदयनादयोऽपि सस्यजीवनस्य
गुणधर्मविवेचनं कृतवन्तः। प्राणिशास्त्रमपि (Zoology) अथर्ववेदादिषु
समालोचितम्। अश्वशास्त्रं गजशास्त्रं चाधिकृत्य अनेके स्वतन्त्रग्रन्थाः
रचिताः। अथर्ववेदे सर्पाणां त्रयोदशभेदाः उपवर्णिताः। 'सर्पशास्त्रे
दल्वनो विशेषज्ञः' इति सुश्रुतटीकायां लाट्यायनेनोक्तम्। क्रिस्तपूर्व-
तृतीयशतके एव भारते पशुचिकित्सालयाः अवर्तन्तेति।

अथ विज्ञानस्य प्रगतिः सर्वेषु प्रकारेषु हितमेवाचरतीति च वक्तुं
शक्यते। मारकास्त्राणां निर्माणायापि उपयुज्यते किल वैज्ञानिकं अन्वे-
षणम्। अधुनातनाः विचारशीलाः अत एव त्रस्ताः। विज्ञानदुरुप-
योगस्य परिणामानां परिहरणार्थं चिन्तनशीलाश्च।

परिसरस्य परिरक्षणाय वृक्षाणां रक्षणस्य अनिवार्यता नूतनया
विज्ञानशाखया संप्रति घोष्यते। प्राचीनाः विज्ञानवन्तः इदं
सम्यगवगम्य वृक्षरक्षणप्रामुख्यं परिसरशुद्धेः आवश्यकतां च प्रति-
पादयामासुः॥

'पञ्चाम्ररोपी नरकं न याति'

इत्यादिवाक्यैः तेषां तत्र श्रद्धा व्यक्ता भविष्यति ।

प्राचीनविज्ञानविचक्षणाः किं किं साधितवन्तः ? इति ज्ञानं अस्माकं आवश्यकम् । एतदर्थं विज्ञानेतिहासाध्ययनमपि नितान्तं अपेक्षितम् ।

अस्माकं पूर्वजाः पारलौकिकेषु विचारेषु अधिकश्रद्धालवोऽपि, भौतिकविज्ञानस्य नैकासु शाखासु निष्णाता अपि आसन् इत्यवगम्यते । तेषां सिद्धीनां अध्ययनेन साकं अद्यतनस्य ज्ञानस्य संयोगः अस्माकं महते उत्कर्षाय कल्पते ॥

---

## ಟಿಪ್ಪಣಿ

अप्रतिहता—ಅಡೆತಡೆಯಿಲ್ಲದ್ದು  वैदेशिकाः—ವಿದೇಶೀಯರು
अभियानं—ಧಾಳಿ.

विज्ञानं—Physical Sciences

सिद्धयः—ಸಾಧನೆಗಳು  निष्कृष्ट—ಖಚಿತ.

अयः—ಕಬ್ಬಿಣ  भारत+ईय = भारतीयाः = भारताः ॥  ರೋಮನ್ ಅಂಕೆ
ಗಳಿಂದ ಗಣಿತ ಪ್ರಕ್ರಿಯೆಗಳು ಕಷ್ಟವಾಗಿರುತ್ತದೆ. ಉದಾ: 14+38 =52
(XIV+XXXVIII = LII)

मूर्धन्य - ಶಿಖರಪ್ರಾಯ.

एकदश—ಏಕ, ದಶ, ಶತ, ಸಹಸ್ರ, ಅಯುತ, ಲಕ್ಷ, ಪ್ರಯುತ, ಕೋಟಿ,
ಅರ್ಬುದ, ಖರ್ವ, ನಿಖರ್ವ, ಮಹಾಪದ್ಮ, ಶಂಕು, ಜಲಧಿ, ಅಂತ್ಯ, ಮಧ್ಯ,
ಪರಾರ್ಧ—ಎಂಬ ಹತ್ತರ ಗುಣಕ ಸಂಜ್ಞೆಗಳನ್ನು ಕ್ರಮವಾಗಿ ಸಂಖ್ಯಾ
ಸ್ಥಾನಗಳ ವ್ಯವಹಾರಕ್ಕಾಗಿ ಹಿಂದಿನವರು ಮಾಡಿದ್ದಾರೆ.

**ಚಕ್ರಕ್ರೌಞ್ಚ**—ಚಕ್ರವಾಕ ಮತ್ತು ಕ್ರೌಂಚಪಕ್ಷಿಗಳಿಂದ ಕೂಡಿದ ಕೆರೆಯ ನೀರಿನ ಮಟ್ಟದಿಂದ ಅರ್ಧಹಸ್ತದಷ್ಟು ಮೇಲಕ್ಕೆ ಒಂದು ಕಮಲವಿದೆ. ಅದು ಗಾಳಿಗೆ ಬಾಗಿ ಎರಡು ಹಸ್ತದಷ್ಟು ದೂರ ನೀರನ್ನು ಸ್ಪರ್ಶಿಸುತ್ತದೆ. ಈಗ ನೀರಿನ ಆಳವೆಷ್ಟು ?

ಉತ್ತರ 33/4 ಹಸ್ತಗಳು.

**कलिका**—ಮೊಗ್ಗು { वितस्तिः-द्वादशाङ्गुलः = 1/2 ಹಸ್ತ. अम्भस्-ನೀರು.

ಇದೇ ಗ್ರಂಥದ ಮತ್ತೆರಡು ಉದಾಹರಣೆಗಳು—

बाले ! मरालकुलमूलदलानि सप्त

तीरे विलासभरमन्थरगाण्यपश्यम् ।

कुर्वन् च केलिकलहं कलहंसयुग्मं

शेषं जले वद मरालकुलप्रमाणम् ॥

ಹುಡುಗಿಯೇ ! ನೀರಾಟವಾಡುತ್ತಿದ್ದ ಹಂಸ ಸಮೂಹದ ವರ್ಗಮೂಲದ ಅರ್ಧದ ಏಳುಪಾಲಿನಷ್ಟು ದಡ ಸೇರಿದವು. ಒಂದು ಜೋಡಿ ಕಲಹಂಸಗಳು ಆಟಕ್ಕಾಗಿ ಆ ನೀರಿನಲ್ಲೇ ಜಗಳವಾಡುತ್ತ ಉಳಿದವು. ಇವನ್ನು ನೋಡಿದೆ. ಈಗ ಹಂಸ ಸಮೂಹದ ಸಂಖ್ಯೆಯನ್ನು ಹೇಳು.

(ಉತ್ತರ $\frac{7}{2}\sqrt{\text{का}}+2 = \text{का}$ : का $= 16$)

ಇಲ್ಲಿ का ಎಂದರೆ $x$

अलिकुलदलमूलं मालतीं यातमष्टौ

निखिलनवमभागश्चालिनी भृङ्गमेकम् ।

निशि परिमललुब्धं पद्ममध्ये निरुद्धं

प्रतिरणति रणन्तं ब्रूहि कान्तेऽलिसंख्याम् ॥

ಕಾಂತೆಯೇ ! ದುಂಬಿಗಳ ಒಂದು ಗುಂಪಿನ ಅರ್ಧದ ವರ್ಗಮೂಲದಷ್ಟು ದುಂಬಿಗಳು ಜಾಜಿ ಹೂವಿನೆಡೆಗೆ ತೆರಳಿದವು. ಅದೇ ಗುಂಪಿನ ಎಂಟರಷ್ಟು ಕೂಡ ಹಾಗೆಯೇ ಹೋದವು. ಪರಿಮಳದಾಸೆಯಿಂದ ಹೋಗಿ ರಾತ್ರಿಯಲ್ಲಿ ತಾವರೆಯೊಳಗೆ ಸಿಕ್ಕಿಕೊಂಡ ಒಂದು ಗಂಡು ದುಂಬಿಯ ಝೇಂಕಾರಕ್ಕೆ ಹೆಣ್ಣು ದುಂಬಿಯೊಂದು ಹೊರಗಡೆ ಪ್ರತಿಧ್ವನಿಸುತ್ತಿತ್ತು. ಈಗ, ಒಟ್ಟು ದುಂಬಿಗಳ ಸಂಖ್ಯೆ ಎಷ್ಟು ?

(ಉತ್ತರ : $\sqrt{\frac{\text{का}}{2}} + \frac{8\ \text{का}}{9}\ 2 = \text{का} : \text{का} = 72$)

अव्यक्तपदं—ಬೆಲೆಯರಿಯದ ರಾಶಿ. ಉದಾ x या, का....

कुट्टक-वर्गप्रकृति-चक्रवालानि = ಭಾರತೀಯ ಗಣಿತದ ವಿಶಿಷ್ಟ ಪ್ರಕ್ರಿಯೆಗಳು.

प्रमाणं—ಪ್ರಾಪ್ತಿಷ್ಟ. समीकरणं—ಸಮೀಕರಣ (Equation)

यावत्तावत्—ಯಾವತ್ತಾವತ್ = (ಯಾ—ಎಷ್ಟೋ ಅಷ್ಟು) ಮತ್ತು ಕಾಲಕ ನೀಲಕ, ಪೀತಕ ಲೋಹಿತಕ (ಸಂಕ್ಷೇಪವಾಗಿ—ಕಾ, ನೀ, ಪೀ, ಲೋ) ಮೊದಲಾದ ಬಣ್ಣಗಳ ಹೆಸರುಗಳನ್ನು (a b c x y z ಮೊದಲಾದ ಅಕ್ಷರ ಗಳಂತೆಯೇ) ಬೆಲೆಯರಿಯದ ರಾಶಿಗಳ ಸಂಕೇತಗಳನ್ನಾಗಿ ಶ್ರೇಷ್ಠರಾದ ಆಚಾರ್ಯರು ಕಲ್ಪಿಸಿದ್ದಾರೆ. यावत् तावत् x ಎಂಬುದರಂತೆ ಉಪಯೋಗಿ ಸುವ या ಅಕ್ಷರದ ವಿವರಣೆ.

दीर्घचतुरस्रस्य—ಒಂದು ಆಯತದ ಬದಿಯ ಹಾಗೂ ಅಡ್ಡದ ಹಗ್ಗಗಳು (ರೇಖೆ ಗಳು) ಪ್ರತ್ಯೇಕವಾಗಿದ್ದುಕೊಂಡು ಯಾವ ಚೌಕಕ್ಷೇತ್ರವನ್ನು ಮಾಡುತ್ತವೋ, ಆಯತದ ಕರ್ಣರಜ್ಜುವು ಅವೆರಡರಷ್ಟು ಅಳತೆಯ ಚೌಕಕ್ಷೇತ್ರವನ್ನು ಮಾಡುತ್ತದೆ.

संख्यावद्भिः—ಪಂಡಿತರಿಂದ

जात्यत्रिभुजे—ಲಂಬಕೋನ ತ್ರಿಭುಜದಲ್ಲಿ ಪಾದ ಹಾಗೂ ಬದಿಯ ರೇಖೆಗಳ ವರ್ಗಗಳ ಮೊತ್ತವು ಕರ್ಣದ ವರ್ಗಕ್ಕೆ ಸಮವಾಗಿದೆ.

$$x^2 + y^2 = d^2$$



अभिधानं—ಹೆಸರು

स्थिराङ्कः—Constant आसन्नं—ಅಂದಾಜು (approximate)

मित्रो....ಸೂರ್ಯನು ಭೂಮಿ ಮತ್ತು ಆಕಾಶಗಳನ್ನು ಧರಿಸಿದ್ದಾನೆ. (ಭೂಮಿಗೆ ಸೂರ್ಯನೇ ಆಧಾರ) उत—ಮತ್ತು

यं वै सूर्यः—ಅಸುರನಾದ ರಾಹುವು ಯಾವ ಸೂರ್ಯನನ್ನು ನೆರಳಿನಿಂದ ಆವರಿಸಿದನೋ ಅವನನ್ನು (ಅಂತಹ ಸೂರ್ಯನ ಬಗ್ಗೆ ಸರಿಯಾದ ತಿಳುವಳಿಯನ್ನು) ಅತ್ರಿ ಋಷಿಯ ವಂಶದವರು ಪಡೆದರು. ಇತರರು ಅರಿಯಲು ಶಕ್ತರಾಗಲಿಲ್ಲ.

नवो नवो—ಕೃಷ್ಣಪಕ್ಷದಲ್ಲಿ ಪ್ರತಿದಿನ ತಡವಾಗಿ ಉದಯಿಸುತ್ತ ದಿವಸದ ಧ್ವಜದಂತೆ ಉಷೆಯ ಮುಂದಿನಿಂದ (ಉಷಃಕಾಲಕ್ಕೆ ಮುಂಚೆ) ಮೂಡಬರುತ್ತ (ಅಮವಾಸ್ಯೆಯಲ್ಲಿ ಯಜ್ಞವನ್ನು ಆರಂಭಿಸುವವರ ಮೂಲಕ) ದೇವತೆಗಳಿಗೆ ಹವಿರ್ಭಾಗವನ್ನು ಕೊಡಿಸುವ ಚಂದ್ರನು ದೀರ್ಘಾಯುವನ್ನು ಉಂಟುಮಾಡಲಿ.

("तमस्तु राहुः स्वर्भानुः" ಅಮರಕೋಶ)

चन्द्रमा अमावास्यायां—ಚಂದ್ರನು ಅಮಾವಾಸ್ಯೆಯಂದು ಆದಿತ್ಯನ ಬಳಿ ಸರಿಯುತ್ತಾನೆ. ಆದಿತ್ಯನಿಂದಲೇ ಚಂದ್ರ ಉಂಟಾಗುತ್ತಾನೆ. (ಸೂರ್ಯನ ಪ್ರಕಾಶದಿಂದಲೇ ಬೆಳದಿಂಗಳು ಉಂಟಾಗುತ್ತದೆ.)

सूर्यरश्मिश्चन्द्रमा—ಸೂರ್ಯ ರಶ್ಮಿಯೇ ಆಕಾಶದಲ್ಲಿ ಸಂಚರಿಸುವ ಚಂದ್ರ (ಬೆಳದಿಂಗಳು)

प्राणेन—ನಾಲ್ಕು ಸೆಕೆಂಡಿನಲ್ಲಿ. क्ष्मा:—ಭೂಮಿಯು.

कलां—ಒಂದು ಕಲೆಯಷ್ಟು (ವೃತ್ತದ 1/21600 ಭಾಗ)

एति—ಮುಂಬರುತ್ತದೆ – ತಿರುಗುತ್ತದೆ.

अतिशेते—ಅತಿಶಯ (ಮಹತ್ವಪೂರ್ಣ)ವಾಗಿದೆ.

रसः-पारदः—ಪಾದರಸ Mercury.

रोगनिदानं—ರೋಗ ಕಾರಣವನ್ನು ಗುರ್ತಿಸುವುದು.

औषधयोगाः—ಸಸ್ಯಗಳಿಂದ ಮದ್ದನ್ನು ತಯಾರಿಸುವುದು.

**रोहिण्यसि**—ಎಲೈ ರೋಹಿಣಿಯೇ ! ಮುರಿದ ಮೂಳೆಯನ್ನು ಕೂಡಿಸುವ ರೋಹಿಣೀ ಬಳ್ಳಿಯು (ಕೆಂಪು ಬಣ್ಣದ್ದು) ನೀನಾಗಿರುವೆ. **रोहिणी**—ಒಂದು ವಿಶಿಷ್ಟವಾದ ಸಸ್ಯ.

**मदनपालनिघण्टुः**—ಮದನಪಾಲನೆಂಬುವನು ತಯಾರಿಸಿದ ಕೋಶ. ಇದು ಔಷಧ ಗುಣಧರ್ಮಕೋಶವಾಗಿದೆ. (Materia Medica) ಇದರಲ್ಲಿ ಸಸ್ಯ, ಪ್ರಾಣಿ ಮತ್ತು ಖನಿಜ ಮೂಲಗಳಿಂದ ಸಿದ್ಧಪಡಿಸಿದ ಸುಮಾರು 600 ಔಷಧ ಗಳನ್ನು ವಿವರಿಸಲಾಗಿದೆ.

**अस्थि**—ಮೂಳೆ. **गोमृद्वस्थि**—ಹಸುವಿನ ಮೃದು ಮೂಳೆ.

**उत्खननं**—ಅಗೆಯುವುದು. **खलनः**—ಒಬ್ಬ ಪ್ರಾಚೀನ ಸರ್ಪ ಶಾಸ್ತ್ರಜ್ಞ.

**लाटचायनः**...ಸುಶ್ರುತ ಸಂಹಿತೆಯ ಟೀಕಾಕಾರ.

**अधुनातनाः**—ಆಧುನಿಕರು.

**पञ्चाम्ररोपी नरकं न याति**—ಐದು ಮಾವಿನ ಗಿಡಗಳನ್ನು ನೆಟ್ಟು ಬೆಳೆಸುವವನು ನರಕಕ್ಕೆ ಹೋಗುವುದಿಲ್ಲ.

---

## ಅಭ್ಯಾಸ

1. ಪ್ರಾಚೀನ ಭಾರತೀಯರ ಸಾಧನೆಗಳನ್ನು ಕುರಿತು ಪ್ರಬಂಧ ಬರೆಯಿರಿ.
2. ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ಕಂಡುಬರುವ ಭೌತಿಕ ವಿಜ್ಞಾನದ ಕೆಲವು ಅಂಶಗಳನ್ನು ಉದಾಹರಣೆಗಳೊಂದಿಗೆ ವಿವರಿಸಿರಿ.
3. ಗಣಿತ ಶಾಸ್ತ್ರಕ್ಕೆ ಪ್ರಾಚೀನ ಭಾರತೀಯರ ಕೊಡುಗೆಯನ್ನು ವಿವರಿಸಿರಿ.
4. ವಿಜ್ಞಾನಲೋಕಕ್ಕೆ ಭಾರತೀಯರ ಕೊಡುಗೆಯನ್ನು ಕುರಿತು ಪ್ರಬಂಧ ಬರೆಯಿರಿ.
5. ಟಿಪ್ಪಣಿ ಬರೆಯಿರಿ—

   १. गणितशास्त्रम्

   २. लीलावती

   ३. भास्कराचार्यः

   ४. त्रिभुजसिद्धान्तः अथवा - शुल्बसिद्धान्तः

५. खगोलशास्त्रम्

६. भौतशास्त्रम्

७. रसशास्त्रम्

८. आयुर्वेदः

---

# BIBLIOGRAPHY

## ಕೆಲವು ಉಪಯುಕ್ತ ಗ್ರಂಥಗಳು

1. ಲೀಲಾವತೀ (ಭಾಸ್ಕರಾಚಾರ್ಯ)
2. ಬೀಜಗಣಿತ (ಭಾಸ್ಕರಾಚಾರ್ಯ)
3. ಸಿದ್ಧಾಂತ ಶಿರೋಮಣಿ (ಭಾಸ್ಕರಾಚಾರ್ಯ)
4. ಗಣಿತ ತರಂಗಿಣೀ (ಸುಧಾಕರ ದ್ವಿವೇದಿ)
5. ಬೃಹತ್ಸಂಹಿತಾ (ವರಾಹಮಿಹಿರ)
6. ಆರ್ಯಭಟೀಯಂ (ಆರ್ಯಭಟ)
7. ಶುಲ್ಬಸೂತ್ರಮ್ (ಕಾತ್ಯಾಯನ)
8. ಚರಕ ಸಂಹಿತಾ (ಚರಕ)
9. ಸುಶ್ರುತಸಂಹಿತಾ (ಸುಶ್ರುತ)
10. ಗಣಿತ ಶಾಸ್ತ್ರದ ಚರಿತ್ರೆ (ಸಿ. ಎನ್ ಶ್ರೀನಿವಾಸಐಯ್ಯಂಗಾರ್, ಮೈಸೂರು ವಿಶ್ವವಿದ್ಯಾನಿಲಯ)
11. ಸಂಸ್ಕೃತ ಮತ್ತು ವಿಜ್ಞಾನ (ಡಾ. ರಾಜಾರಾಮಣ್ಣ, ಅಖಿಲ ಕರ್ನಾಟಕ ಸಂಸ್ಕೃತ ಪರಿಷತ್)
12. A Concise History of Science in India.
13. Positive Sciences of the Ancient Hindus (B. N. Seal)

14. Positive Sciences in Vedas (D. D. Mehta)

15. Bhaskara Souvenir (National Seminar on Scientific Heritage of India, Mythic Society)

16. Eastern Religion and Western thought (Dr. S. Radhakrishnan)

17. History of Sanskrit Literature (M. Winternitz)

18. History of Chemistry (P. C. Ray)

19. सनातनविज्ञानसमुदयः (C. Venkataramanayya)

20. Bharatiya Vidya (S. B. Varnekar)

21. मानसोल्लासः (सोमेश्वरः)

22. शिवतत्वरत्नाकरः (केळदि बसव भूपालः)

23. Studies in the History of Science in India (D. P. Chattopadhyaya)

24. Copper and Iron in India (P. Neogi)

25. History of Hindu Mathematics (B. B. Dutta and A. N. Singh)

## मालविकाग्निमित्रकथासंग्रहः

"काव्येषु नाटकं रम्यम्" ಎಂಬ ಉಕ್ತ್ಯನುಸಾರ ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯಕ್ಷೇತ್ರದಲ್ಲಿ ದೃಶ್ಯ ಕಾವ್ಯಗಳಿಗೆ ವಿಶೇಷವಾದ ಸ್ಥಾನವುಂಟು. ಈ ಕಾವ್ಯಗಳ ರಚನಾಕಾರರಾದ–ಭಾಸ, ಅಶ್ವಘೋಷ, ಭವಭೂತಿ, ಶೂದ್ರಕ, ವಿಶಾಖದತ್ತ, ಭಟ್ಟನಾರಾಯಣ ಇವರುಗಳ ಮಧ್ಯೆ 'ಕವಿಕುಲಗುರು' ಎಂಬ ಬಿರುದಾಂಕಿತನಾದ ಕಾಳಿದಾಸನಿಗೆ ಅಗ್ರಸ್ಥಾನವಿದೆ.

ಈತನ ಬಗೆಗೆ ಹಲವಾರು ದಂತ ಕಥೆಗಳು ಪ್ರಚಾರದಲ್ಲಿದ್ದರೂ ಕೂಡ, ಅವು ಈತನ ಕಾಲ, ದೇಶ, ಜೀವಿತಾದಿಗಳ ನಿರ್ಣಯಕ್ಕೆ ಯೋಗ್ಯ ಪ್ರಮಾಣಗಳಾಗುವುದಿಲ್ಲ.

ಈತನು ದಡ್ಡನಾದ ಕುರುಬನಾಗಿ ಕಾಲಕ್ರಮದಲ್ಲಿ ಕಾಳಿಕಾದೇವಿಯು ವರಪ್ರಸಾದದಿಂದ ಮಹಾಕವಿಯಾದನೆಂಬ ಒಂದು ಕಥೆಯಿದೆ. ಧಾರಾನಗರಿಯ ಭೋಜರಾಜನ ಆಸ್ಥಾನ ಕವಿಯಾಗಿದ್ದು ಕವಿಚಕ್ರವರ್ತಿಯೆನಿಸಿಕೊಂಡು ಸಮಸ್ಯಾಪೂರಣ ಮಾಡುತ್ತಿದ್ದನೆಂದು ಮತ್ತೊಂದು ಕಥೆ.

ಕರ್ನಾಟಕದ ಐಹೊಳೆಯಲ್ಲಿರುವ ರವಿಕೀರ್ತಿಯ ಶಾಸನದಲ್ಲಿ (ಕ್ರಿ.ಶ. 634) ಕಾಳಿದಾಸನ ಪ್ರಶಂಸೆ ಇದೆ. ಏಳನೆಯ ಶತಮಾನದ ಕವಿ ಬಾಣಭಟ್ಟ ತನ್ನ ಹರ್ಷಚರಿತ ಕಾವ್ಯದಲ್ಲಿ ಕಾಳಿದಾಸನನ್ನು ಹೊಗಳಿದ್ದಾನೆ.

ಆದ ಕಾರಣ ಕಾಳಿದಾಸನು ಈ ಶಿಲಾಶಾಸನಕ್ಕಿಂತಲೂ ಹಿಂದಿನವನೆಂದು ನಿರ್ವಿವಾದ. ಈತನ ನಾಟಕದಲ್ಲಿ ಬಂದಿರುವ ಶುಂಗವಂಶದ ರಾಜನಾದ ಪುಷ್ಯಮಿತ್ರ, ಅಗ್ನಿಮಿತ್ರ, ವಸುಮಿತ್ರ ಮೊದಲಾದವರು ಕ್ರಿ.ಪೂ. 178 ರಿಂದೀಚೆಗೆ ಇದ್ದ ಚಾರಿತ್ರಿಕ ವ್ಯಕ್ತಿಗಳು.

ಇವೇ ಮೊದಲಾದ ಹಲವಾರು ಅಂಶಗಳ ಪರಿಶೀಲನೆಯಿಂದ ಕಾಳಿದಾಸನ ಕಾಲ ಕ್ರಿ.ಶ. ನಾಲ್ಕು ಅಥವಾ ಐದನೆಯ ಶತಮಾನವೆಂದು ಬಹುತೇಕ ವಿದ್ವಾಂಸರ ಅಭಿಪ್ರಾಯವಿದೆ.

ವಿಕ್ರಮರಾಜನ ಆಸ್ಥಾನದ ನವರತ್ನಗಳಲ್ಲಿ ಒಬ್ಬನೆನಿಸಿದ ಕವಿ ಕಾಳಿದಾಸ ತನ್ನ ಕಲಾಪ್ರತಿಭೆಯಿಂದ, ಚಮತ್ಕಾರ ನೈಪುಣ್ಯದಿಂದ, ಕಥಾಸಂವಿಧಾನದಿಂದ, ಪಾತ್ರಪೋಷಣೆಗಳಿಂದ ಸಹೃದಯರ ಮನತಣಿಸುವ ಅಮರ ಕೃತಿಗಳನ್ನು ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯಕ್ಕೆ ಕೊಡುಗೆಯಾಗಿ ಕೊಟ್ಟಿದ್ದಾನೆ.

ಈತನು ಬರೆದಿರುವ ನಾಟಕಗಳು ಮೂರು—1) ಮಾಳವಿಕಾಗ್ನಿಮಿತ್ರ 2) ವಿಕ್ರಮೋರ್ವಶೀಯ 3) ಅಭಿಜ್ಞಾನಶಾಕುಂತಲ.

ಮಾಳವಿಕಾಗ್ನಿಮಿತ್ರವು ಐದು ಅಂಕಗಳಿಂದ ಕೂಡಿದ ಲಘು ಹಾಗೂ ಲಲಿತ ನಾಟಕ.

ತನ್ನ ಪರಾಕ್ರಮದಿಂದ ಮೌರ್ಯಾಧಿಪತ್ಯವನ್ನೆಲ್ಲಾ ಕೈವಶಮಾಡಿಕೊಂಡು 'ಸೇನಾಪತಿ' ಎಂಬ ಬಿರುದಾಂಕಿತನಾಗಿ, ಪಾಟಲೀಪುತ್ರ ರಾಜಧಾನಿಯಾದ ವಿದಿಶಾ ಪಟ್ಟಣದಲ್ಲಿ ನೆಲೆಸಿರುವ ದೊರೆ ಅಗ್ನಿಮಿತ್ರನೇ ಈ ನಾಟಕದ ನಾಯಕ. ಈತನ ಇಬ್ಬರು ರಾಣಿಯರು ಧಾರಿಣಿ ಮತ್ತು ಇರಾವತಿ. ನೆರೆರಾಜ್ಯದ ವಿದರ್ಭ ದೇಶದ ಮಾಧವಸೇನನ ತಂಗಿಯಾದ ಮಾಳವಿಕೆ, ಈತನ ವಧುವೆಂದು ನಿಶ್ಚಯವಾಗಿದ್ದ ಮತ್ತೊಬ್ಬ ರಾಜಕುಮಾರಿ ಹಾಗೂ ನಾಟಕದ ನಾಯಿಕೆ.

ಸಿಂಹಾಸನಕ್ಕಾಗಿ ದಾಯಾದಿಗಳ ಕಲಹ ನಡೆದಿದೆ. ಅಗ್ನಿಮಿತ್ರನ ಸಹಾಯವನ್ನು ಗಟ್ಟಿಮಾಡಿಕೊಳ್ಳಲು ಮಾಧವಸೇನ ಪರಿವಾರಸಮೇತ ಮಾಳವಿಕೆಯನ್ನು ಅಗ್ನಿಮಿತ್ರನಲ್ಲಿಗೆ ಕಳುಹಿಸುತ್ತಿರಲು ಮಾರ್ಗ ಮಧ್ಯದಲ್ಲಿ ಕಳ್ಳರಿಂದ ಆಕ್ರಮಣ ಮಾಡಲ್ಪಡುತ್ತಾರೆ. ಮಂತ್ರಿಯು ಸತ್ತು, ಆತನ ಸಹೋದರಿಯಾದ ಪಂಡಿತಕೌಶಿಕೀ ಹಾಗೂ ಮಾಳವಿಕೆ, ಹೇಗೋ ಗಡಿರಕ್ಷಕರ ನೆರವಿನಿಂದ ಅಗ್ನಿಮಿತ್ರನ ಆಶ್ರಯನೆಗೆ ಬಂದು ಸೇರುತ್ತಾರೆ. ವಿಧಿವಶಾತ್ ರಾಣಿ ಧಾರಿಣಿಯ ದಾಸಿಯಾಗಿ ಅಂತಃಪುರ ಸೇರುವ ಮಾಳವಿಕೆ ಚಿತ್ರದಲ್ಲಿ ಅಗ್ನಿಮಿತ್ರನ ಕಣ್ಣಿಗೆ ಬಿದ್ದು ಆತನಿಂದ ಮೋಹಿಸಲ್ಪಡುತ್ತಾಳೆ. ಇಂತಹ ಸುಂದರಿಯನ್ನು ರಾಜನ ದೃಷ್ಟಿಯಿಂದ ಮರೆಮಾಡುವುದು ಧಾರಿಣಿಯ ಉದ್ದೇಶ. ಆದರೆ ಮಾಳವಿಕೆ ಹಾಗೂ ಅಗ್ನಿಮಿತ್ರನ ಸಮಾಗಮವನ್ನು ಸಾಧಿಸಲು ನೆರವಾಗುವ ವ್ಯಕ್ತಿಗಳು ರಾಜನ ವಿದೂಷಕನಾದ ಗೌತಮ ಮತ್ತು ಪರಿವ್ರಾಜಿಕೆ ಪಂಡಿತ ಕೌಶಿಕೀ.

ಅಗ್ನಿಮಿತ್ರ ಮತ್ತು ಮಾಳವಿಕೆಯರಲ್ಲಿ ಅಂಕುರಿಸುವ ಪ್ರೇಮ ವಿಕಸಿತವಾಗಿ, ಎಲ್ಲ ಸಮಸ್ಯೆಗಳನ್ನೂ ದಾಟಿ, ವಿವಾಹದಲ್ಲಿ ಪರ್ಯವಸಾನವಾಯಿತೆಂದು ತೋರಿಸುವುದೇ ಈ ನಾಟಕದ ಕಥಾವಸ್ತು.

ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯದ ಅನೇಕನಾಟಕಗಳನ್ನು ಗದ್ಯ ರೂಪದಲ್ಲಿ ಬರೆದು ಪ್ರಕಟ ಪಡಿಸಿದ ಕೀರ್ತಿ ಕವಿ, ಪಂಡಿತ ವಿ. ಅನಂತಾಚಾರ್ಯರಿಗೆ ಸಲ್ಲುತ್ತದೆ.

ಈ ಶತಮಾನದ ಪೂರ್ವಾರ್ಧದಲ್ಲಿ ಮದ್ರಾಸಿನ ಪಚ್ಚಿಯಪ್ಪ ವಿದ್ಯಾಲಯದಲ್ಲಿ ಅಧ್ಯಾಪಕರಾಗಿ ಸೇವೆಸಲ್ಲಿಸಿ ಕೀರ್ತಿಶೇಷರಾದ ಇವರು

'मधुराणामाकृतीनां यथातथा वाऽप्यनुभवः
आह्लादायैव भवति'

ಎಂಬ ನುಡಿಯನ್ನು ಆಲೋಚಿಸಿ ಮೂಲರೂಪಕ್ಕೆ ಚ್ಯುತಿ ಬರದಂತೆ ಯಥಾವತ್ತಾಗಿ ನಾಟಕದ ಕಥೆಯನ್ನು ಗದ್ಯರೂಪಕ್ಕಿಳಿಸಿದ್ದಾರೆ.

---

## मालविकाग्निमित्रकथासंग्रहः

अस्ति विदर्भो नाम जनपदः । तत्र माधवसेनो नाम राजकुमारः आसीत् । तस्य यवीयसी स्वसा मालविका नाम । अनुपमसौन्दर्यवतीं शैशवे पितुरङ्के लाल्यमानां तां अकस्मादागतः सिद्धादेशः साधु दृष्ट्वा एवमाह 'संवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यति' इति । तमिमं वृत्तान्तं माधवसेनः न ज्ञातवान् । तदमात्यस्य सुमतेः यवीयसी भगिनी पण्डितकौशिकी तु शुश्राव । ततः प्रतिदिनं उपचीयमानाङ्गप्रत्यङ्गसौष्ठवा मालविका क्रमेण शैशवं अतिनीतवती ॥

तदानीं मालवदेशे विदिशां राजधानीं अधितिष्ठन् अग्निमित्रो नाम पुत्रः पुष्यमित्रस्य अभिजनादिभिः अखिलैर्वरगुणैः अनूनः राजा आसीत् । तमेव मालविकायाः वरमनुरूपं निश्चित्य कुमारमाधवसेनः तस्मै दूतं विससर्ज अग्निमित्रोऽपि माधवसेनेन सह सम्बन्धं अभिनन्द्य दूतं समान्य 'शीघ्रमेव पाणिग्रहणमङ्गलं निर्वर्त्यताम्' इति प्रतिसंदिष्टवान् ।

अत्रान्तरे माधवसेनस्य पितृव्यपुत्रः यज्ञसेनो नाम विदर्भेषु लब्धराज्य आसीत् । तुल्याभिजनौ यज्ञसेनमाधवसेनौ राज्यनिमित्तं अन्योन्यं बद्धवैरौ अभूताम् । विषयानन्तरत्वेन प्रकृत्यमित्रं द्विषन् अग्निमित्रः प्रतिश्रुतसम्बन्धस्य माधवसेनस्य बलवान् आश्रयः बभूव । कदाचित् अग्निमित्रः मुद्गलं नाम यज्ञसेनस्य स्यालं निगृह्य बन्धने निक्षिप्तवान् । तेन प्रवृद्धवैरः यज्ञसेनः प्रतिकूलकारिणः अग्निमित्रस्य अपकर्तुं समयं प्रतीक्षमाणः आसीत् ॥

(4) माधवसेनः पाणिग्रहणमङ्गलं निर्वर्तयितुं वैवाहिकेन नेपथ्येन अलंकृतां मालविकामादाय अमात्येन सुमतिना पण्डितकौशिक्या सैनिकैश्च समं विदिशां प्रतस्थे । यज्ञसेनस्य अन्तपालः मध्येमार्गं अवस्कन्द्य माधवसेनं जग्राह । सैन्यसङ्कुलात् भीतां मालविकां अमात्यसुमतिः पण्डितकौशिक्या सह गूढमपवाह्य विदिशागामिनं सार्थवाहकुलं अनुप्रविष्टः ॥

(5) अथ अटव्यन्तरे गच्छन्तं सार्थवाहकुलं आटविकाः प्रतिरोधकाः प्रतिरुरुधुः । उभयेषां अतिभयानके युद्धे प्रवृत्ते बलिभिः आयुधपाणिभिः तस्करैः पराङ्मुखीकृताः सार्थवाहाः पलायाञ्चक्रिरे ।

(6) भर्तृप्रियः सुमतिः पराभिभवकातरां मालविकां रिरक्षिषुः सुचिरं युद्ध्वा, सफलीकृतभर्तृपिण्डः प्राणैः भर्तुरानृण्यं प्रतिपेदे । भ्रातृमरणजनितं दुःखातिभारं सोढुं अपारयन्ती पण्डितकौशिकी किङ्कर्तव्यतामूढहृदया मुहूर्तं मोहमुपजगाम । अथ प्रतिपन्नसंज्ञा चक्षुरुन्मील्य 'धिक् कष्टं, मालविका कथमास्ते ?' इति यावत् दिक्षु चक्षुः विक्षिपति, तावत् सा दुर्लभदर्शना संवृत्ता । तेन द्विगुणीकृतशोका अहो 'कष्टादुपरि कष्टमापतितम् । 'विपद्विपदमनुबध्नाति' इति लौकिकी गाथा न मिथ्या इति विचार्य, सुचिरमन्विष्यापि मालविकामपश्यन्ती भ्रातुश्शरीरमग्निसात्कृत्य पुनर्नवीकृतवैधव्यदुःखा विदिशानगरमवाप्य यतिवेषधारिणी काषायग्रहणमकरोत् ।

(7) निहतसहायां एकाकिनीं प्रवाते कदलीमिव वेपमानां मालविकामभिवीक्ष्य दयार्द्रहृदयाः ते तस्कराः नातिदूरे नर्मदातीरे अग्निमित्रेण राज्ञा अन्तपालदुर्गे स्थापितस्य देव्याः धारिण्याः वर्णावरभ्रातुः वीरसेनस्य हस्तं प्रापयामासुः । सोऽपि इमां 'शिल्पाधिकारे योग्येयं दारिका' इतिसन्दिश्य, भगिन्यै धारिण्यै उपायनं प्रैषितवान् । सापि आकृतिविशेषप्रत्ययात् 'उत्कृष्टाभिजना भवितुमर्हति' इति सम्भाव्य तस्यां अत्यन्तस्निग्धदृष्टिरासीत् ॥

अथ च परमनिपुणां अतिमेधाविनीं तां नाट्यशास्त्रमध्यापयितुं आचार्यगणदासमादिष्टवती । भिन्नरुचीनां युगपत् समाराधनचणे नाना-रसभरिते स्वकुलविद्याभूते नाट्यशास्त्रे निरतिशयंप्रावीण्यं आवहन् गणदासः गुणाधिकं उपदेशमात्रमासाद्य नितरां तुतोष ।

अत्रान्तरे आत्मना सह सम्बन्धेच्छया प्रस्थितं माधवसेनं दायाद-वंशगतं अग्निमित्रः श्रुत्वा यज्ञसेनस्य एवं संदिष्टवान्—'भवतः पितृव्यपुत्रः कुमारो माधवसेनः प्रतिश्रुतसम्बन्धः ममोपान्तिकमुपसर्पन् अन्तरा त्वदीयेन अन्तपालेन अवस्कन्द्य गृहीतः । सः त्वया मदपेक्षया सकलत्रसोदर्यः त्वया मोक्तव्यः ।' इति । तस्य यज्ञसेनः प्रतिलेखम् एवं प्रेषितवान्-यथा—'तुल्याभिजनेषु भूमिहरेषु इयं राज्ञां वृत्तिः । अत्र मध्यस्थः पूज्यो भवितुमर्हति । सोदर्या पुनरस्य ग्रहणविप्लवे विनष्टा । तदन्वेषणाय प्रयतिष्ये । अथ अवश्यमेव मया माधवसेनः मोचयितव्यः मुच्यतां भवता संयतः मुद्गलसचिवः मम स्यालः ।' इत्येवं कार्यविनिमयेन व्यवहरन्तं अचिराधिष्ठितराज्यं वैदर्भं उन्मूलयितुं अग्निमित्रः वीरसेनप्रमुखं दण्डचक्रं आज्ञापितवान् ॥

अथ कदाचित् शिल्पाचार्यः शिल्पकौशलमात्मनः प्रदर्शयितुकामः चित्रशालायां अखिलपरिजनपरिवृतायाः धारिणीदेव्याः प्रतिकृतिं लिलेख । तत्र प्रत्यग्रवर्णरागां आचार्यस्य चित्रलेखां अवलोकयन्त्याः समीपं अकस्मात् अग्निमित्रः आजगाम ।

उपचारानन्तरं एकासनोपविष्टः स राजा चित्रगतायाः परिजनमध्य-गतां मालविकां दृष्ट्वा, 'किंनामधेयेयं अपूर्वा दारिका तव आसन्ना आलि-खिता ?' इति देवीं अपृच्छत् । अवधीरितवचनेन शङ्कितेन राज्ञा पुनः पुनः अनुबद्धाऽपि सा यावत् न कथयति, तावत् तस्याः कनीयसीकुमारी वसुलक्ष्मीः आख्यातवती—'आवुत्त ! एषा मालविका' इति ॥

राजा तु प्रथमदर्शने एव तदीयेन रूपातिशयेन आकृष्टहृदयः तस्यां दृढानुरक्तः बभूव । यदृच्छादृष्टप्रतिकृतिं तां प्रत्यक्षतः द्रष्टुं आचकाङ्क्ष । देवी धारिणी तु चित्रदर्शनात्प्रभृति मालविकां सविशेषं राज्ञो दर्शनपथात् रक्षन्ती आसीत् ।

राजा तु वृत्तान्तमिमं नर्मसचिवाय गौतमाय निवेद्य 'मालविकां प्रत्यक्षदर्शनां कर्तुं उपायश्चिन्त्यतां' इत्यादिदेश । सोऽपि निपुणतरमुपायं उपक्रान्तवान् । यथा—अस्ति हरदत्तो नाम गणदासादपरः नाट्याचार्यः सः इरावतीं नाम राज्ञो यवीयसीं भार्यां नाट्यविद्यां अध्यापयन् आस्त ॥

नर्मसचिवः गौतमः हरदत्तगणदासावुपसृत्य उपजापेन परस्परं स्पर्धां उत्पादितवान् । गणदासं गत्वा 'हरदत्तः भवन्तं गणदासः न मे पादरजसापि तुल्यः इति अधिक्षिप्तवान् इति प्रोवाच । हरदत्तं गत्वा गणदासः त्वमुद्दिश्य तस्य तव च समुद्रपल्वलयोरिव अन्तरं इति परिवादं कृतवान् इति बभाषे । अनेन उपजापेन सञ्जातसंरम्भौ हरदत्तगणदासौ राज्ञः समक्षमेव आवयोरधरोत्तरव्यक्तिः भविष्यति' इति निश्चित्य, राजानमुपगम्य 'देव ! आवयोः परस्परविज्ञानसङ्घर्षे भवानेव नौ विशेषज्ञः प्राश्निकः । तदावां शास्त्रे प्रयोगे च विमृशतु' इत्यूचतुः ॥

एवं गौतमेन प्ररोपितस्य सुनीतिपादपस्य कुसुमं उद्भिन्नं दृष्ट्वा नितरां हृष्टः राजा आत्मनः पक्षपातसम्भावनया पण्डितकौशिकीं प्राश्निकपदे प्रतिष्ठाप्य देव्या धारिण्या सहितः 'प्रस्तूयतां विवादः' इत्याज्ञापयामास ।

परिव्राजिका तु 'प्रयोगप्रधाने नाट्यशास्त्रे वाग्व्यवहारः मास्तु, उपदेशदर्शनेनैव निर्णयः कार्यः' इत्याज्ञापयामास । सर्वाङ्गसौष्ठवाभिव्यक्तये, विगतनेपथ्याभ्यां शिष्याभ्यां छलिताख्या चतुष्पदा शर्मिष्ठायाः कृतिः अभिनीयताम् इत्यादिदेश च ।

अथ सङ्गीतरचनायां मृदङ्गस्य मध्यमस्वरां मायूरीं मार्जनां उपश्रुत्य समुत्सुकाः सर्वे सामाजिकाः ससम्भ्रमं प्रेक्षागृहं प्रविविशुः।

हरदत्तगणदासयोः समानेऽपि ज्ञानवृद्धभावे गणदासस्य वयोधिकत्वेन पुरस्कारार्हत्वात् तस्यैव उपदेशः प्रथमं प्रष्टव्यः आसीत्। अतः आचार्येण नियुक्ता मालविका समामागत्य चतुष्पदां गीतिं यथारसं अभिनिनाय। प्राश्निकपदमधितिष्ठन्ती परिव्राजिका तस्याः अभिनयं दृष्ट्वा 'यथादर्शनं सर्वं अनवद्यम्' इति नितरां प्रशशंस॥

अथ मालविकायां आचार्येण सह निष्क्रान्तायां हरदत्तः 'मदीयं उपदेशं अवलोकयितुं प्रसादः क्रियताम्, इत्यभ्यर्थितवान्। राजा तु मध्याह्नसमयस्योपस्थितत्वात् 'त्वदीयमुपदेशं श्वः द्रक्ष्यामः' इत्युक्त्वा तं विससर्ज।

परेद्युः हरदत्तस्याप्युपदेशं दृष्ट्वा, परिव्राजिका मालविकायाः गुणविशेषेण गणदासमेव प्रशंसितवती। यौवने वयसि वर्तमाना मालविका माधवसेनेन पूर्वमेव सङ्कल्पितं आत्मनोऽनुरूपं भर्तारं अग्निमित्रं दृष्ट्वा तस्मिन् दृढानुरक्ता देव्या धारिण्या तद्दर्शनात् अधिकतरं रक्ष्यमाणा अनुभूतमुक्तेव मालतीमाला नितरां ग्लायन्ती अप्रतीकारगुरुकां वेदनां अनुभवन्ती आसीत्॥

अग्निमित्रोऽपि देव्याः धारिण्याः चित्तं रक्षन् आत्मनः मालविकागतमनुरागं अन्तर्निगूह्य पराधीनदर्शनां तामेव अनुध्यायन् अत्यन्तमुत्कण्ठितः कतिपयं कालं अयापयत्। अत्रान्तरे देवी धारिणी नववसन्तावतारोत्सवे पुष्पोद्याने राज्ञा सह डोलाधिरोहणमनुभवितुं आचकाङ्क्ष।

गौतमस्तदा राजदम्पतिभ्यामध्यारूढां डोलां बलवत् आन्दोलयामास। ततः निरवलम्बा धारिणी भूमौ निपत्य सरुजचरणा बभूव। तदानीमेव निपुणिका नाम इरावत्याश्चेटी राजानमागत्य प्रणम्य एवं विज्ञापितवती। 'देव! देवी इरावती विज्ञापयति—अस्मिन नवे वसन्तोत्सवे

आर्यपुत्रेण सह प्रमदवने डोलाधिरोहणमनुभवितुमिच्छामि ।' इति । दाक्षिण्यपरवशः राजा तत् तथेत्यङ्गीकृत्य गौतमेन सह प्रमदवनं प्रविवेश । समयेऽस्मिन् चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदं कर्तव्यमासीत् । उत्कृष्टाभिजनवत्याः सर्वलक्षणसम्पन्नायाः सर्वालङ्कारभूषितायाः सुन्दर्याः पादप्रहारेण अशोकः पुष्यतीति प्रसिद्धिः । आत्मनः सरुजचरणतया देवी धारिणी दोहदं निर्वर्तयितुं मालविका योग्येति कृत्वा नियुयोज प्रतिजज्ञे च—यदि सः पञ्चरात्राभ्यन्तरे कुसुमं दर्शयिष्यति तदैव अभिलाषपूरयितृकं प्रसादं दास्यामीति ॥

मदनव्याधिना परामृष्टा मालविका चरणालङ्कारहस्तया वकुलावलिकाख्यया सख्या सह तदेव प्रमदवनं गत्वा दोहदापेक्षिणः तपनीयाशोकस्याधस्तात् प्रच्छायशीतले शिलापट्टके निषसाद ॥

राजा तु गोतमेन सह लतान्तरितो भूत्वा तयोः संलापं शृण्वन् आस्त । तदानीं लब्धावसरा वकुलावलिका राज्ञः अनुरागमधिकृत्य मालविकां विदितार्थां अकरोत् । तेन परमानन्दभरिता मालविका देव्याः धारिण्याः सकाशात् आत्मनो मनोरथस्य प्रतिबन्धं आशङ्कमाना 'मम दुर्जातसमये साहाय्यमाचरितव्यं' इति वकुलावलिकां अभ्यर्थितवती । तयापि तथेत्यङ्गीकृते विरचितपल्लवावतंसा मालविका सलीलं अशोकपादपाय पादं प्राहिणोत् । तदानीं पूर्वमेव अभिसंहितं डोलाधिरोहणमनुभवितुं इरावती निपुणिकाख्यया चेट्या सह तदेव प्रमदवनं प्रविश्य प्रियङ्गुलतापरिक्षिप्तं शिलापट्टकमध्यास्य मालविकायाः दोहदक्रियां निर्वर्णयन्ती आसीत् ॥

राजा तु तत्र इरावतीसांनिध्यमजानन् अवसरमिमं आसाद्य गौतमेन सह मालविकायास्समीपं उपसृत्य सरसमधुरैस्संलापैः आत्मनो मनोगतमनुरागं निवेदयामास । व्यतिकरमिमं प्रत्यक्षतः निध्यायन्ती इरावती सरभसं अन्तःपुरं गत्वा राज्ञः अविनयं अन्तरेण धारिणीं विदितार्थामकरोत् ।

मालविकायाः अभिजनसौन्दर्य शीलादिभिः सद्गुणैः आराधिता
सा धारिणी इरावत्याश्चित्तं रक्षन्ती निगलितचरणां सखीसहितां अदृष्टसूर्यपादे
भूमिगृहे निचिक्षेप ॥

आदिदेश च तत्र व्यापृतां माधविकाम् । 'न मोक्तव्ये इमे
त्वया नागमुद्रासनाथं मम अङ्गुलीयकमदृष्ट्वा' इति परिजनमुखात्
वृत्तान्तमुपलभ्य राजा विशेषतः विषण्णो बभूव ॥

अथ गौतमः निपुणतरेणोपायेन मालविकां मोचयामास । तथाहि-
सरुजचरणा देवी धारिणी कदाचित् प्रवातशयने निपण्णा परिव्राजिका
कथाभिर्विनोद्यमाना आसीत् । तदानीं गौतमः स्वहस्ते केतकीकण्टकं
सर्पस्येव दंशं कृत्वा यज्ञोपवीतेन संवीताङ्गुष्ठः 'हा ! परित्रायताम्,
मृत्युना दष्टोऽस्मि' इति देव्याः पुरतः सम्भ्रान्त इव ससंभ्रमं समापत्य
निपपात । अवादीच्च—'देवि ! अरिक्तेनपाणिना भवतीं द्रष्टुकामः
प्रमदवनं गत्वा अशोकपुष्पग्रहणकारणात् प्रसारिते अग्रहस्ते कोटरनिर्गतेन
सर्परूपिणा कालेन दष्टोऽस्मि । सिमसिमायन्ति मे अङ्गानि' । कृतेन
कृतेन अस्य विषवेगाभिनयेन दयार्द्रहृदया धारिणी परिजनावलम्बितं
विषवैद्यस्य ध्रुवसिद्धेः समीपं प्रापयामास ।

पूर्वमेव गौतमेन कृतसङ्केतः ध्रुवसिद्धिः 'शीघ्रमेव सर्पमुद्रा
आनीयताम्' इति सन्दिदेश । सद्य एव धारिणी सर्पमुद्रासनाथं अङ्गुलीयकं
आत्मनः अङ्गुल्याः अवमुच्य दत्त्वा, 'पश्चात् ममैव हस्ते देह्येतत् ।' इति
प्रतीहारीं प्राहिणोत् ॥

प्रत्युत्पन्नमतिर्गौतमः तदङ्गुलीयकमादाय माधविकायै दत्त्वा एवम-
भाषिष्ट—'अद्य राज्ञः नक्षत्रं सोपसर्गम् । तत् कार्तान्तिकादेशेन सर्वबन्धन-
मोक्षः राज्ञा क्रियते । तत् मुच्यतां मालविका सह सख्या इति देवी धारिणी

मन्मुखेन समादिशति' इति। ततः—'युज्यत एतत्' इति कृत्वा माधविका सखीसहितां मालविकां बन्धनात् मोचयामास। गौतमः तां समुद्रगृहे स्थापयित्वा सचेमिमं राज्ञे निवेदयामास। फलितमनोरथः स राजा सकुतूहलः समुद्रगृहमागत्य गौतमं द्वाररक्षकं विधाय शनैश्शनैः सरस-मधुरवचनोपन्यासैः मुग्धायाः मालविकायाः सङ्गमसाध्वसमपनयन् अभिनवं अतिरमणीयं अस्याः मदनविषयावतारं अनुबभूव॥

अत्रान्तरे भर्तुः प्रणिपातलङ्घनजनितं उपचारातिक्रमदोषं प्रमार्ष्टुकामा चित्रगतं भर्तारं प्रसादयितुं इरावती निपुणिकया सह तमेवोद्देशमाजगाम।

तदानीं समुद्रगृहस्य अलिन्दं अध्यास्य उत्स्वप्नायमानं गौतमं अभिवीक्ष्य निपुणिका परिहासनिमित्तं भुजङ्गकुटिलं दण्डकाष्ठं तस्योपरि पातयामास॥ स तु सहसा प्रवुध्य 'अब्रह्मण्यमब्रह्मण्यम्, दर्वीकरः ममोपरि पतितः' इति उच्चैः आचुक्रोश। तत् श्रुत्वा राजा मालविका च सहसा समुद्रगृहात् निर्जग्मतुः। ततः तयोः दिवासङ्केतमुपलभ्य भृशकुपिता इरावती 'धारिणी पक्षपातमवलम्ब्य मालविकां बन्धनात् मोचयामास' इत्याशशङ्के॥

अथ यदृच्छादृष्टायाः सारभाण्डगृहे नियुक्तायाः माधविकायाः मुखात् 'गौतमोद्भिन्नेन नीतिप्रयोगेण मालविका मोचिता' इति बुबुधे। मालविका तु वृत्तान्तमिमं श्रुत्वा 'देवी धारिणी किं वा वदिष्यति?' इति विशेषतः वेपमानहृदया बभूव॥

अत्रान्तरे मालविकया दत्तदोहदः तपनीयाशोकः अपूर्ण एव पञ्चरात्रे पुष्पितः बभूव। तमिमं वृत्तान्तं प्रमदवनपालिका मधुकरिका देव्यै धारिण्यै निवेदयामास। सा तु प्रतिश्रुतपूर्वं मालविकायाः राज्ञे प्रदानरूपं अभिलाप-पूर्णं निर्वर्तयितुं आचकाङ्क्ष ततश्च प्रसाधनकर्मणि अलङ्कर्मीणां परिव्राजिकां वैदर्भेन विवाहनेपथ्येन मालविकां अलङ्कर्तुं अभ्यर्थितवती॥

तया सविशेषालंकृतां मालविकां आदाय सपरिवारा धारिणी प्रमदवनं गत्वा 'तपनीयाशोकस्य कुसुमशोभां द्रष्टुं आगन्तव्यम्' इति सन्दिश्य, राज्ञे प्रतीहारीं विससर्ज ॥

'मालविकायाः पुनर्दर्शनं भविष्यति' इति सकुतूहलः राजा गौतमेन सह प्रमदवनं प्रत्याययौ । अत्रान्तरे यातव्यपक्षे स्थितं विदर्भनाथं यज्ञसेनं अभिषेणयितुं आदिष्टानि वीरसेनप्रमुखानि दण्डचक्राणि तं वशीकृत्य दायादं माधवसेनं मोचयामासुः । सोऽपि अग्निमित्राय महासाराणि रत्नानि वाहनानि शिल्पदारिकाभूयिष्ठं परिजनं च उपायनं प्रेषयामास । तत्रोपायने 'रजनिका' 'ज्योत्स्निका' इति द्वे शिल्पदारिके राजानमुपस्थातुं आगते, तत्र धारिण्याः समीपे स्थितां मालविकां अवलोक्य 'अहो । अस्माकं भर्तृदारिका' इति विस्मयाक्षिप्तहृदये तां प्रणेमतुः ।

'के भवत्यौ ? का वेयम् ?' इति राज्ञा पृष्टे परिव्राजिका कुमारमाधवसेनस्य बन्धनात्प्रभृति सर्वं उदन्तजातं यथावत् निवेद्य 'सेयं मालविका राज्ञे पूर्वमेव दित्सिता, आटविकेभ्यः वीरसेनं, वीरसेनात् देवीं धारिणीं गता' इति अवबोधितवती, तदाकर्ण्य देवी धारिणी 'कष्टं इयं अभिजनवती प्रेष्यभावे नियुक्ता' इति नितरां अनुशुशोच । अग्निमित्रोऽपि दण्डानीकैः स्वायत्तीकृतं विदर्भराज्यं द्विधा विभज्य तत्र यज्ञसेनमाधवसेनौ अवस्थापयामास ।

अत्रान्तरे अग्निमित्रस्य जनकः पुष्यमित्रः यज्ञं अश्वमेधं आरब्धवान् । तत्र संवत्सरोपावर्तनीयस्य राजपुत्रशतपरिवृतस्य तुरगस्य गोप्तारं धारिण्याः तनयं कुमारवसुमित्रं आदिश्य विससर्ज । स च तुरङ्गः सिन्धोः दक्षिणे तीरे चरन् अश्वानीकेन यवनानां प्रार्थितः बभूव । ततः सेनयोरुभयोः महति संमर्दे धन्वी वसुमित्रः परान् पराजित्य अश्वं प्रत्याजहार । अंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वः पुष्यमित्रः परमानन्दभरितः वृत्तान्तावबोधकं लेखं अग्निमित्राय प्राहिणोत् । पुत्रविजयवृत्तान्तश्रवणेन नितरां हृष्टः अग्निमित्रः यज्ञसेनस्यालं मुद्गलं विना सर्वान् बन्धनस्थान् मोचयामास ।

देवी धारिणी परिव्राजिकायाः अनुमते स्थिता माधवसेनेन प्रथममेव सङ्कल्पितां मालविकां सद्यस्समाहृतेन पत्रोर्णेन कृतावकुण्ठनां दृत्तदेवीशब्द 'पुत्रविजयवृत्तान्तश्रवणमहोत्सवेऽस्मिन् अनुरूपं पारितोषिकं अर्यपुत्रः प्रतीच्छतु' इति राज्ञे प्रतिपादयामास ॥

दाक्षिण्यपरवशः अग्निमित्रः मालविकां इरावतीप्रमुखानां अन्तर्टिं पुराणां अनुमते प्रतिगृह्य विहतप्रतिबन्धं तत्समागमसुखं अनुभूय परां कोः- आनन्दस्याध्यगच्छत् ॥

## ಕ್ಲಿಷ್ಟಪದಗಳ ಅರ್ಥ

जनपदः–ದೇಶ. यवीयसी स्वसा–ತಂಗಿ.

पितुः अङ्के–ತಂದೆಯ ಮಡಿಲಲ್ಲಿ. सिद्धादेशः–ಜ್ಯೋತಿಷ್ಕರ ಆದೇಶ. उपचीयमान–ವರ್ಧಿಸುತ್ತಿರುವ.

सौष्ठव–ಸೌಂದರ್ಯ. अधितिष्ठन्–ಆಳುತ್ತಾ.

अभिजन–ಸತ್ಕುಲ. गुणैःअनूनः–ಗುಣಗಳಿಂದ ಕೂಡಿದ.

विससर्ज–ಕಳುಹಿಸಿದನು. सम्बन्धः–ಬಾಂಧವ್ಯ.

अभिनन्द्य–ಸ್ವಾಗತಿಸಿ. पितृव्यपुत्रः–ಚಿಕ್ಕಪ್ಪನ ಮಗ.

विषयान्तरत्वेन–ನೆರೆಹೊರೆಯ ರಾಜ್ಯವುಳ್ಳವರಾದ್ದರಿಂದ.

प्रकृत्यमित्रः–ಸಹಜಶತ್ರು. स्यालः–ಭಾವ.

निगृह्य–ಸೆರೆಹಿಡಿದು. अवस्कन्द्य–ಆಕ್ರಮಿಸಿ.

सार्थवाहकुलं–ವ್ಯಾಪಾರಿಗಳ ಗುಂಪು.

आटविकाः–ಕಾಡಿನವರು. शिल्पाधिकारे–ನಾಟ್ಯವಿದ್ಯೆಯಲ್ಲಿ. नेपथ्यं–ವೇಷ ಭೂಷಣ.

अन्तपालः ಗಡಿ ರಕ್ಷಕ. अपवाह्य–ಕೊಂಡೊಯ್ಯು.

प्रतिरोधकाः–ದರೋಡೆಗಾರರು. बलिभिः–ಬಲಿಷ್ಠರಾದ.

पराभिभवः–ಶತ್ರುವಿನ ಅವಮಾನ. रिरक्षिषुः–ರಕ್ಷಿಸಲು ಇಚ್ಛಿಸಿ.

सफलीकृतभर्तृपिण्डः–ಸ್ವಾಮಿಯ ಋಣವನ್ನು ತೀರಿಸಿ.

आनृण्यं–ಋಣವಿಮೋಚನೆಯನ್ನು. प्रतिपन्नसंज्ञा–ಎಚ್ಚರಗೊಂಡವಳಾಗಿ. गाथा–ಲೋಕೋಕ್ತಿ.

अग्निसात्कृत्य–ಚಿತೆಗಿರಿಸಿ. पुनर्नवीकृत–ಮರುಕಳಿಸಿದ.

अवरः–ಕೀಳು. शिल्पाधिकारयोग्या–ಲಲಿತಕಲೆಗೆ ಯೋಗ್ಯಳು. उपायनं–ಉಡುಗೊರೆ.

युगपत्–ಏಕಕಾಲದಲ್ಲಿ. चण–ಪ್ರಸಿದ್ಧ. उपदेशपात्रं–ಉಪದೇಶಕ್ಕೆ ಯೋಗ್ಯವಾಗಿರುವುದು.

प्रतिश्रुतं–ನಿಶ್ಚಿತ ಸಂಬಂಧವುಳ್ಳ. प्रतिलेखः–ಮರು ಉತ್ತರ.

भूमिधराः–ರಾಜರು. मध्यस्थः–ತಟಸ್ಥ

संयतः–ಬಂಧಿಸಲ್ಪಟ್ಟವನು. दण्डचक्रं–ಸೇನೆ.

प्रतिकृतिः–ಚಿತ್ರ. प्रत्यग्रवर्णः–ಆರದ ಬಣ್ಣ.

परिजनः–ಸೇವಕ ಜನ. अवधीरितं–ಕಡೆಗಣಿಸಲ್ಪಟ್ಟದ್ದು. अनुबद्धं–ನಿರ್ಬಂಧಿಸಲ್ಪಟ್ಟದ್ದು.

आवृत्तः–ಭಾವ. यदृच्छा–ಆಕಸ್ಮಿಕತೆ.

नर्मसचिवः–ಆಪ್ತಸಚಿವ. उपक्रान्तवान्–ಆರಂಭಿಸಿದನು.

उपजापेन–ಕುತಂತ್ರದಿಂದ. पादरजः–ಕಾಲಿನಧೂಳಿ.

पल्वलं–ಹೊಂಡ. परिवादः–ದೂಷಣೆ.

संरम्भः–ಕಲಹ. अधरोत्तरः–ಮೇಲುಕೀಳು.

प्राश्निकः–ತೀರ್ಪುಗಾರ. प्ररोपितं–ನೆಡಲ್ಪಟ್ಟದ್ದು.

उद्भिन्नं–ಹೊಸಹೊಮ್ಮಿದ್ದು. संभावना–ಸಾಧ್ಯತೆ.

चलितं–ಒಂದು ನಾಟ್ಯದ ಪ್ರಕಾರ. मार्जना–ಮೃದಂಗಛಾಪು. प्रसादः–ಅನುಗ್ರಹ.

अनुभूतमुक्ता–ಮುಡಿದುಬಿಟ್ಟಿದ್ದು. म्लायन्ती–ಬಾಡುತ್ತ.

अप्रतीकारगुरुकां–ಚಿಕಿತ್ಸೆಯಿಲ್ಲದ ಕಾರಣ ಹೆಚ್ಚಾದ.

चित्तंरक्षन्–ಮನಸ್ಸಿನ ಇಂಗಿತವನ್ನು ರಕ್ಷಿಸುತ್ತ.

अनुध्यायन्–ಚಿಂತಿಸುತ್ತ. डोला–ಉಯ್ಯಾಲೆ.

निरवलम्बा–ಆಯತಪ್ಪಿದವಳಾಗಿ. सरुजा–ಗಾಯಗೊಂಡ.

प्रतिजज्ञे–ಪ್ರತಿಜ್ಞೆಮಾಡಿ ಮಾತುಕೊಟ್ಟಳು. तपनीयाऽशोकः–ಕೆಂಪು ಅಶೋಕ ವೃಕ್ಷ. लतान्तरितः–ಲತೆಯ ಹಿಂದೆ ಮರೆಯಾಗಿದ್ದು. लब्धावसरः–ಅವಕಾಶಪಡೆದು.

अभ्यर्थितवती–ಪ್ರಾರ್ಥಿಸಿಕೊಂಡಳು.

अवतंसः–ಕಿವಿಯ ಅಲಂಕಾರ. सलीलं–ಅನಾಯಾಸವಾಗಿ.

प्राहिणोत्–ಕಳುಹಿಸಿದಳು. अभिसंहितं–ಸಜ್ಜುಗೊಳಿಸಲ್ಪಟ್ಟ. प्रियङ्गुः–ಲತೆಯ ಭೇದ, निर्वर्णयन्ती–ದಿಟ್ಟಿಸಿನೋಡುತ್ತ.

व्यतिकरः–ಅನುಚಿತ ವರ್ತನೆ. निगलितचरणां ಸರಪಳಿಯಿಂದ ಕಟ್ಟಲ್ಪಟ್ಟ ಕಾಲುಳ್ಳವಳಾದ.

भूमिगृहे–ನೆಲಮಾಳಿಗೆಯಲ್ಲಿ. केतकीकण्टकः–ಕೇದಿಗೆಯ ಮುಳ್ಳು.

यज्ञोपवितसंवीताङ्गुष्ठः–ಜನಿವಾರದಿಂದ ಹೆಬ್ಬೆರಳನ್ನು ಕಟ್ಟಿಕೊಂಡವನಾಗಿ.

अरिक्तेन–ಬರಿಯದಲ್ಲದ. कोटरः–ಹುತ್ತ.

विषवैद्यः–ವಿಷವನ್ನು ಇಳಿಸುವ ವೈದ್ಯ.

अवमुच्य–ತೆಗೆದು. नक्षत्रं सोपसर्गं–ನಕ್ಷತ್ರ ದೋಷಯುಕ್ತವಾಗಿದೆ.

कार्तान्तिकः–ಜ್ಯೋತಿಷ್ಯ ಹೇಳುವವನು.

साध्वसं–ಹೆದರಿಕೆ. प्रमार्ष्टुकामा–ತೊಡೆದುಹಾಕಲು ಇಚ್ಛಿಸಿದವಳಾಗಿ.

अलिन्दं–ಜಗುಲಿ. अध्यास्य–ಕುಳಿತು.

अब्रह्मण्यं–(ಸಹಾಯದ ಕರೆಯ ಕೂಗು.)

दर्वीकरः–ಹಾವು. दिवासङ्केतः–ಹಗಲಿನಲ್ಲಿ ಸೇರುವ ಸ್ಥಳ.

पक्षपात:-ಪಕ್ಷವನ್ನು ವಹಿಸಿ. सारभाण्डगृहं-ಸರಕು ತುಂಬುವ ಕೋಣೆ.

प्रसाधनकर्मणि अलङ्कर्मीणा-ಸಿಂಗರಿಸುವ ಕೆಲಸದಲ್ಲಿ ಸಮರ್ಥಳಾದ,
यातव्यपक्षः-ಶತ್ರುಪಕ್ಷ. अभिषेणयितुं-ಮುತ್ತಿಗೆ ಹಾಕಲು. महासाराणि-
ಬೆಲೆಬಾಳುವ.

उपस्थातुं-ಸೇವೆಗೈಯ್ಯಲು. तदन्तजातं-ಪೂರ್ಣವಾದ ಕಥೆಯನ್ನು.

दित्सितं-ಕೊಡಲು ಇಚ್ಛಿಸಿದ. दण्डः-ಸೈನ್ಯ.

उपावर्तनीयः-ಕೊನೆಗೊಳ್ಳುವುದು. गोप्ता-ರಕ್ಷಕ.

अनीकं-ಸೈನ್ಯ. परः-ಶತ್ರು.

अनुमते स्थिता-ಅದೇ ಅಭಿಪ್ರಾಯವುಳ್ಳ.

पत्रोर्णं-ಕಸೂತಿಯುಳ್ಳ ರೇಷ್ಮೆಯ ಅವಗುಂಠನ.

प्रतीच्छतु-ಸ್ವೀಕರಿಸಲಿ. विहतप्रतिबन्धं-ಅಡ್ಡಿಮಾಡಲ್ಪಡದ.

## मालविकाग्निमित्रनाटककथा

## ಪ್ರಶ್ನೆಗಳು

1) ಆಕಸ್ಮಿಕವಾಗಿ ಚಿತ್ರದಲ್ಲಿ ನೋಡಿದ ಮಾಲವಿಕೆಯನ್ನು ಪಡೆಯುವಲ್ಲಿ ರಾಜ ಅಗ್ನಿಮಿತ್ರನು ಹೇಗೆ ಸಫಲನಾಗುತ್ತಾನೆ ? ನಿರೂಪಿಸಿ.

2) ಅಗ್ನಿಮಿತ್ರನು ಮಾಲವಿಕೆಯನ್ನು ಪಡೆಯುವಲ್ಲಿ ವಿದೂಷಕನು ಹೂಡುವ ಪ್ರತಿ ತಂತ್ರಗಳ ಸ್ವಾರಸ್ಯವನ್ನು ನಿರೂಪಿಸಿ.

3) ಅಗ್ನಿಮಿತ್ರನ ದೃಷ್ಟಿಗೆ ಮಾಳವಿಕೆಯು ಬೀಳದಂತೆ ರಾಣಿಯರು ಮಾಡುವ ಪ್ರಯತ್ನ ಮತ್ತು ಅದರ ಪರಿಣಾಮಗಳನ್ನು ಕುರಿತು ಬರೆಯಿರಿ.

4) ಮಾಲವಿಕಾಗ್ನಿಮಿತ್ರದಲ್ಲಿ ಬರುವ ಗೌಣಪಾತ್ರಗಳ ಪ್ರಾಮುಖ್ಯವನ್ನು ವಿವರಿಸಿ.

ಲಘು ಟಿಪ್ಪಣಿ ಬರೆಯಿರಿ :

1) ಹರದತ್ತ ಗಣದಾಸರ ಕಲಹ
2) ದೋಹದ ಪ್ರಸಂಗ
3) ಧಾರಿಣಿ
4) ಬಕುಲಾವಲಿಕೆ
5) ನಿಪುಣಿಕೆ
6) ಇರಾವತೀ
7) ಪರಿವ್ರಾಜಿಕೆ
8) ಮಾಲವಿಕೆ.

# ಸತೀ ಚಿಂತಾದೇವಿ

ಈ ಕಥೆಯನ್ನು 'ಮಧುರವಾಣೀ' ಎಂಬ ಸಂಸ್ಕೃತ ಮಾಸಪತ್ರಿಕೆಯ 24ನೇ ಸಂಪುಟದ (1959ರ) 5ನೇ ಸಂಚಿಕೆಯಿಂದ ಆರಿಸಲಾಗಿದೆ. ಈ ಕಥೆಯ ಲೇಖಕರು 'ಮಧುರವಾಣಿ' ಮಾಸಪತ್ರಿಕೆಯ ಸಂಸ್ಥಾಪಕರೂ, ಪ್ರಕಾಂಡ ವಿದ್ವಾಂಸರೂ ಆದ ಶ್ರೀ ರಾಮಾಚಾರ್ಯ ಗಲಗಲಿಯವರು.

ಪಂಡಿತ ಶ್ರೀ ರಾಮಾಚಾರ್ಯ ಗಲಗಲಿಯವರು ಕರ್ನಾಟಕದ ಗದಗ ಪ್ರಾಂತದವರು. ಇವರು ತಮ್ಮ ವಿದ್ವತ್ತು, ಕವಿತಾಶಕ್ತಿ ಮತ್ತು ಶಿಷ್ಯಸಂಪತ್ತಿನಿಂದಾಗಿ ದೇಶದಾದ್ಯಂತ ಪ್ರಸಿದ್ಧರಾಗಿದ್ದಾರೆ. ಇವರು ಬಾಲ್ಯದಲ್ಲಿಯೇ 'ಸಹೃದಯಾ', 'ಸಂಸ್ಕೃತ ಚಂದ್ರಿಕಾ' ಮುಂತಾದ ಪತ್ರಿಕೆಗಳಿಗೆ ಲೇಖನಗಳನ್ನೂ, ಶ್ಲೋಕಗಳನ್ನೂ ಬರೆದು ವಿದ್ವತ್ ಪ್ರಪಂಚದಲ್ಲಿ ಸ್ಥಾನವನ್ನು ಗಳಿಸಿದರು. ಸ್ವತಃ "ಸೌದಾಮಿನೀ" ಎಂಬ ಸಂಸ್ಕೃತ ಪತ್ರಿಕೆಯನ್ನು ನಡೆಸಿದರು. ಅಲ್ಲದೆ ಬೆಳಗಾವಿ ನಗರದಿಂದ "ಮಧುರವಾಣೀ" ಎಂಬ ಸಂಸ್ಕೃತ ಮಾಸಪತ್ರಿಕೆಯನ್ನು ಪ್ರಾರಂಭಿಸಿ 30 ವರ್ಷಗಳಿಗೂ ಹೆಚ್ಚು ಕಾಲ ನಡೆಸಿದರು. 1968ನೇ ಇಸ್ವಿಯಲ್ಲಿ ಶ್ರೀ ರಾಮಾಚಾರ್ಯರಿಗೆ ಕೇಂದ್ರ ಸರಕಾರವು ರಾಷ್ಟ್ರಪ್ರಶಸ್ತಿಯನ್ನು ನೀಡಿ ಇವರ ಅಪಾರ ವಿದ್ವತ್ ಹಾಗೂ ಸಂಸ್ಕೃತ ಸೇವೆಯನ್ನು ಗೌರವಿಸಿತು. ಇವರಿಗೆ "ಸಾಹಿತ್ಯರತ್ನ", "ಅಭಿನವ ಕಾಳಿದಾಸ" ಮುಂತಾದ ಬಿರುದುಗಳಿವೆ. ಗೈರ್ವಾಣೀನಿರ್ವೇದ, ಮುಕುಂದಮುರಲೀ ಮುಂತಾದ ಅನೇಕ ಗ್ರಂಥಗಳನು ರಚಿಸಿದ್ದಾರೆ. ಸಂಸ್ಕೃತ–ಕನ್ನಡ ಉಭಯ ಭಾಷಾ ಕವಿಗಳಾದ ಇವರ ಕೀರ್ತಿ ದೇಶದಲ್ಲೆಲ್ಲಾ ಹರಡಿದೆ.

"ಸತೀ ಚಿಂತಾದೇವಿ" ಕಥೆಯು ಬುಂದೇಲ್ ಖಂಡದಲ್ಲಿ ಮುನ್ನೂರು ವರ್ಷಗಳ ಹಿಂದೆ ನಡೆದ ಒಂದು ಘಟನೆ. ಈ ಕಥೆಯಲ್ಲಿ ಪ್ರಾಚೀನ ಭಾರತೀಯ ಮಹಿಳೆಯ ಧೀರ ಸ್ವಭಾವವು ಸೊಗಸಾಗಿ ಚಿತ್ರಿತವಾಗಿದೆ.

# सती चिन्तादेवी

अतीतेऽपि वत्सराणां शतकत्रये, नाद्यापि विस्मृतिपथमुपगतं साधुसीमन्तिनीचिन्तनीयचरित्रायाः चिन्तादेव्याः पावनतरमभिधानम् । बुन्देलखण्डे निर्जने किलैकस्मिन् प्रदेशे सहस्रशः नराः नार्यश्च सम्मिलिताः अद्यापि सादरं अर्चयन्ति चिन्तादेव्याः सहगमनपावनां वेदिकां क्षुद्रायतनवर्तिनीम् । परमिदं सहगमनं न वल्लभस्य देहेन समं, किन्तु जीवतोऽपि तस्यात्मनेति नितान्तं विस्मयावहं रोमाञ्चकारि च प्राचीनभारतभामिनीजनस्य ओजस्विताप्रत्यायकं कथानकम् ॥

यमुनातीरे काल्पीपनाम्नी काचन नगरी । तस्यां कस्यचन शूरस्य कन्येयं चिन्तादेवी । या बाल्यतो मातृविहीना पितृलालिता समुपचितसमरसमये लब्धजनुः । तदा शूराः तन्द्रासहजजृम्भारम्भायापि नासादयन्नवसरम् । अश्वस्कन्धे एव भोजनम्, पर्याणे एव शयनमासीत् सैनिकानाम् । चिन्तायाः बाल्यमतीयाय समरभूमावेव । पिता किल तां तरुगहने निधाय, रणाङ्गणमुपधावति स्म । तदानीं एकाकिनी निश्चिन्ता चिन्ता मृदा दुर्गं निर्माय पुनस्तद्भङ्गलीलां खेलति स्म । आसायमनागतेऽपि पितरि क्षा निर्जने वने नाविन्दत भयलेशमपि । एवं क्षुधावेदनामविगणय्य नैकाः अनैषीन्निशाः । सा कम्पमानकन्धरैः दशनविहीनतया अस्फुटोच्चारैः जरठाजनैः गदितकाकचटककथाभिः आत्मानं न व्यनोदयत्, किन्तु वीराणां आत्मबलिदानकथाभिः सावेशभटमुखनिस्सृताभिः नवस्फूर्तिदायिनीभिः ॥

एकदा अतिक्रान्तेऽपि दिनत्रये तया नाश्रावि जनकवार्ताऽपि तथाऽपि अविषण्णान्तरा विचिन्तयन्त्यासीत् अरिभिर्दुर्गरचनाम् । निशायां शयाना तादृशानेव ददर्श स्वप्नान् । तृतीयदिने सायंसमये पितृसहचराः केचनाभ्येत्य साश्रुनयनाः सगद्गदकण्ठं व्यलपन् विह्वलान्तराः । विस्मय स्तिमिता चिन्ता क्वास्ति मे जनयिता ? कुतो वा रुद्यते भवद्भिः ? इति पर्यपृच्छदनुद्विग्नैव । अदत्तोत्तरास्ते शोकातिशयात् एकमक्षरमप्यु च्चारयितुं अशक्नुवानाः पुनः यदा अधिकमरुदन्, तदा सा नूनमज्ञासीत् अकथितेऽपि तातस्य परलोकातिथित्वम् । तदा त्रयोदशवर्षदेशीया सा वीरा बालिका नोत्ससर्ज नयनात् बाष्पबिन्दुमपि । मुखचन्द्रोऽपि तस्याः न किञ्चिदपि मालिन्यमवाप शोकवारिदेन निःश्वसितवायुसहचरेण । स्मित-मुखी सा जगाद तदा 'पितरि मे वीरस्वर्गं गते सन्तोष्टव्येऽस्मिन् प्रसंगे कुतो वः शोकावेगः ? यदि रुग्णशय्यायां पतितः तनुमत्यक्षत्, तर्हि परिदेवनं उचितमभविष्यत् । वीराणां किमितोऽन्यन्मरणं श्लाघ्यतरं अभीष्टतमं च ? किमितोऽन्यत् परितोषिकं पराक्रमस्य ? नायं विलापस्य समयः, किन्तु सन्तोषभरस्य ॥'

कश्चन सैनिको व्याजहार कातरस्वरेण न वयं शोचामस्ते पितृकृते । परं अनाथायास्ते स्थितिं परिचिन्त्य । कुत्र वा स्थास्यते भवत्या इतः परम् ?

चिन्ता गम्भीरस्वरेणाह—मद्विषयचिन्तया नायास्यतामात्मा वृथा । अहं शूरपितुः कन्याऽस्मि । तमेवानुचिकीर्षामि तादृशैरेव कर्मभिः । सः आत्मनो मातृभूमिं रिपुभ्यो मोचयितुमेव धारातीर्थे न्यमज्जयदात्मानं महा-भागः । स एवादर्शः मे चक्षुषोः स्फुरति परितः । तदधुना गच्छत । यदि मम जनके वास्तवो वोऽभिमानः तर्हि प्रत्यर्थिकृतनिकृतिप्रतीकाराय सङ्गृह्यन्तां सैनिकाः । आनीयतां मे समरक्षमो वाजिवरः, समुपाह्रियन्तां शस्त्राणि यैः किल कूर्चैः रिपुशिरोभिः कन्दुकक्रीडां करिष्यामि । भगवतो

ऽनुग्रहश्चेत् भवत्साहाय्येन आहवे विजयश्रिया सख्या सङ्गता स्याम्। यदि वैरिबलात् असहनतया रणपराङ्मुखी स्यां, तर्हि तु दैव मे मस्तकं निशिततरकरवालेन कबन्धात् दूरीक्रियताम् । इयमेव मे प्रार्थना भवतु। साम्प्रतं गम्यतां शीघ्रं समरभूमिम् ॥

व्यतीयुः पञ्च वसन्तमासाः । सर्वतः प्रभुत्वमाविश्चकार चिन्तादेवी । पराभूताः प्रत्यर्थिनः । विजयश्रियमिव मूर्तिमतीं शरप्रहारभीकरे समरे निश्शङ्कमवस्थितां तां निरीक्ष्यैव सैनिकाः नितरामुत्साहशालिनः समपद्यन्त । पुरेगच्छन्त्यां तस्यां वीरास्ते पुरुषाः कथं न पुरस्सरेयुः! सुन्दरीणां सांमुख्ये शूराणां शूरत्वमजेयमेव स्यात् । रमणीनां वाक्यप्रहारो हि योद्धृभ्यः आत्मसमर्पणाय गुप्तसन्देश एव । तासां कटाक्षप्रेक्षणं क्लीबानां हृदयेष्वपि पौरुषांकुरमुद्भावयेत् । चिन्तादेव्या विलसन्ती कान्तिः विमला च कीर्तिः सर्वतः शूरानाकृष्य प्रावेशयत् सैन्येषु । मरणभयविरहिताः शूरमधुकराः कुसुममिदं पर्यवृण्वन् सामोदमामोदभरसमास्वादस्पृहया लवः ।

तेषु सैनिकेषु रत्नसिंहो नाम रजपूतयुवाप्येक आसीत् । चिन्तादेव्याः सैनिकाः तस्याः एकशब्देनैव सर्वस्वत्यागे बद्धादराः सङ्केतमात्रेण प्राणसमर्पणे सन्नद्धाः, केवलं सन्देशेन ताराऽऽनयनाय गगनमप्युत्पतितुं समुत्सुकाः आसन् । भटगणरत्नसरे मध्यहीरायमाणः रत्नसिंहः नावलेपलवेनापि संस्पृष्टः । इतरेषां यत्किञ्चिदपि कर्म चिन्ताप्रेमफलोद्देशकमेव, न पुनः कर्तव्यबुद्ध्या कृतम् । शान्तस्वभावः आत्मकत्थनकथानभिज्ञश्च रत्नसिंहस्तु कर्तव्यबुद्ध्या कर्माणि कुर्वन् मध्येपथं शार्दूलं जघ्निवानपि न कस्यापि पुरतः तां वार्तामावेदयति । तस्य नम्रता विनयश्च सङ्कोचसीमानं नात्यक्रामेताम् । इतरेषां चिन्ताविषयप्रेम्णि विलोलोऽस्तिस्म परं रत्नसिंहप्रणये त्यागः तपश्च समौत्कट्येन व्यभ्राजताम् । अपरे सुखनिद्रया निशासमयं अत्यवाहयन् ।

रत्नसिंहस्तु तारकागणनयैव विभावरीमत्यवाहयज्जागरूक एव । परे चिन्तेयं मामेव वृणीत, मामेव वृणीत–इति भावनापरवशतया प्रमोदपारावारे न्यमज्जन् । रत्नसिंहस्तु नैराश्यमेवाभजत् तस्मिन् विषये । तत्कृते कमपि नाद्रेट्रू सः । पुरतः इतरेषां सम्भाषणपद्धतिं विविधव्यापाररीतिं च विलोक्य विस्मयस्तिमितः आत्मनः साधुतायै एव कदाचित कुप्यति स्म । अबलायाः चित्ताकर्षकं गुणं कुतो नात्मनि न्यधात् ? इति भगवन्तं मनसा पर्यन्वयुङ्क्त सरलहृदयः विञ्चित्क्रोधकलुषित इव । परमस्य कोपं को विचारयेत् ? को वा जानीयादस्य मनोव्यथाम् ? अन्तरेव तप्यति स्म दुरन्ताभिः चिन्तासन्ततिभिः ॥

अतिक्रान्तो निशीथः । चिन्ता आत्मनः शिबिरे विश्रान्तिसुखमनु–भवति ।

सर्वे सैनिकाः निश्चिन्ततया सुप्ताः । पुरतो घोरमेकमरण्यम् । शैलस्य पश्चाद्भागे रिपुबलमेकं कृतशिबिरं दृश्यते । प्रातरेव तदभियोक्तुं निरणैषीच्चिन्ता । आत्मनो वार्ता प्रायः शत्रुभिः नाज्ञायि इति मुधाऽ–मन्यत । परं तस्याः सैनिकेषु कोऽपि कृतघ्नः संमिलितः गौप्येन केना-प्यविज्ञातः बहिर्भक्तिभावं प्रदर्शयन् चिन्तादेव्यां प्रतिदिनमत्रत्यं सकलमप्यु–दन्तं ज्ञापयामास वैरिणः । ततोऽरिभिः संमन्त्र्य नियुक्ताः त्रयः पुरुषाः श्वापदा इव निश्शब्दं पदं निक्षिपन्तः वनमतिक्रम्य वृक्षान्तरितशरीराः चिन्ता-ग्रहणचिन्तातुराः तस्याः शिबिरं पर्यवेक्षमाणास्तस्थुः । चिन्तासैन्यानां सुप्ततया नात्मनः कार्यसिद्धौ किञ्चिदपि सन्दिदिहिरे ते । तरुमूलाभिगतास्ते त्रयः पुरुषाः मकरा इव शनैः पुरस्सरन्तः शिबिरमुपा-गच्छन् ।

गाढनिद्राविलीना सेना । द्वारपालकोऽपि परिश्रमसहजस्वापवश-तामयासीत् । परं तदा एक एव चिन्तायाः शिबिरसमीपे कोऽप्यजाग–रीत्, शिशिरबाधया संकुचितशरीरः सोऽयं वीररत्नायमानो रत्नसिंह एव ।

साऽथ नास्यामेव रात्र्यामजागरीत्. किन्तु प्रातीनेशं तादृशो व्यासङ्ग एवा-सीत्तस्य। घातकानां पदशब्दं निशम्य समुत्थितः तत्क्षणं कोशान्निस्सार्य कराल करवालं सम्मुखमापततः नरान् निरीक्षमाणो व्यचिन्तयत् किमिदानीं करवाणि ? इदानीं कोऽपि शब्दः समुत्थितः स्यात् तर्हि सहसा विनष्ट-स्वापतया अस्मत्सैनिकाः सम्भ्रान्ताः किंकर्तव्यताविमूढाः अन्धकारे स्वपरवि-ज्ञानविधुराः परस्परं शस्त्रप्रहारेण नश्येयुः। अथ एकस्यैव मे वीरपुरु-त्रयाभिगमनं मृत्युदेवताऽह्वानमेव। विचारकरणेऽपि नास्तीदानीमवसरः' इति विचारयन्नेव कृतनिर्धारो रत्नसिंहः स्वयमेक एव तेषु प्रतिवीरेषु व्यापार-यामास शस्त्रम्। क्षणमश्रूयत प्रचलितानामायुधानां मिथः सङ्घर्षजो ध्वनिः। क्षणादेव विलीनः सः। पुनः स्तब्धतामगमत् तत्कटकम्। तत्र वीरत्रयं यमपुरीं अवाप। एकस्तु मूर्च्छया निश्चेतनः॥

प्रातस्तु समुत्थिता चिन्ता सहसा ददर्श भूमौ पतितान् चतुरः पुरुषान्। चकम्पे हृदयं तस्याः। समीपमुपसृत्य सा आक्रमणार्थमुपागतं अश्यद्वैरिवीरत्रयं परासुं श्वासोच्छ्वासमात्रानुमेयजीवितं रत्नसिंहं च। वृत्त-मवागच्छत् सर्वं केनाप्यनिवेदितमपि। जितं शूरत्वेन नारीत्वम्। पितृ-मरणेऽपि बाष्पकणिकामप्यमुक्तवती धीरा इदानीं सा कुमारी विपुलनयनजा-सारतश्चाश्रुकुल्यामेव अवाहयदविरतप्रवाहम्। रमणीरत्नं निश्चेष्टं रत्नसिंह-मात्मन उत्सङ्गे आदाय हृदयविवाहमण्टपे प्रेमकुसुमग्रथितां स्वयंवरमालां अर्पयामास वीरवरस्य तस्य कण्ठे।

गतेऽपि मासे नोन्मिमील लोचनं रत्नसिंहस्य। न वा निमिमील चिन्तातुरायाः चिन्तायाः चक्षुः। क्षणमपि न परिजहार तस्य सांनिध्यं सचिन्ता चिन्ता। न सस्मार निजं राज्यमपि। अचिरादेव अभियोत्स्य-मानं नागणयद्रिपुगणम्। सर्वस्वमपि समार्पयद्रत्नसिंहाय। पुनः कतिप-येषु दिवसेषु यातेषु प्रोन्मीलितचक्षुः रत्नसिंहः पर्यङ्के शयानमात्मानं, सविधे

उपविश्य व्यजनेन वीजयन्ती चिन्तां च सममेवावलोक्य प्रतिभटानामुपकारं मन्यमानः मूर्च्छामपि बहुमानयंश्च 'कोमलाङ्गि ! अलमायासेन, व्यजन-ग्रहणेन द्विगुणीभूतश्चारुणिमा ते पाणितले' इत्यवादीत् अस्फुटस्वरेण ।

चिन्तायाः हृदयं इदानीं अगाधमपारं च स्वर्गसुखं समीपमन्वमंस्त । मासात्पूर्वं मूर्च्छया निश्चेतनस्य शरीरस्य पुनरद्य वदनतः निःसृतं अमृतायमानं वचनं निशम्य चिन्तायाः सीमां अतीयाय प्रमोदभरः । स्नेहपूरित-स्वरेण मञ्जु भाषिणी बभाण । 'प्राणनाथ ! व्यजनवीजनं यदि दुःखा-वहं स्यात् तर्हि जगति किं वाऽन्यत् सुखाय कल्पेत ? नाहं जाने । 'प्राणनाथ' इति प्रेमाह्वानशब्देऽपि विलक्षणा शक्तिरासीदन्तर्हिता । यमाकर्ण्य किमपि तेजो दधार चक्षुर्युगलं रत्नसिंहस्य । प्राद्योतत म्लाना मुखमुद्रा । सञ्चचार नवजीवनमंगेषु स्फूर्तिमयम् । तस्मिन् जीवने महीयानेवोत्साहः, अपरिमितं माधुर्यम्, समुत्कटश्चोल्लासः, सहजा करुणा च सममिलन् । आत्मनो भुजे किमप्यलौकिकं बलं स्यादित्यमंस्त रत्नसिंहः । सकलमेव च जगतीतलं जयेयमेवेति तस्य चेतसि समुदपद्यत कोऽपि विस्रम्भः । उत्पत्य गगनं स्पृशेयम् । गिरिमपि विदारयेयम् इति समजन्यात्मप्रत्ययः तस्मिन् । कदापि अननुभूतां तृप्तिमध्यगच्छत् सः । प्रसन्ने परमेश्वरे वरान् दातुं सन्निहितेऽपि 'न तस्माद्वृणे वरान्' इति भावमाविर्भावयन्मुख-मुद्रया । न कस्मिन्नपि वस्तुनि बबन्धाभिलाषं तन्नारीरत्नमन्तरा । कोऽप्य-भिमानोऽपि सञ्जातस्तस्य मानसे—न कोऽप्यस्ति मत्तस्सुखाधिकः भाग्यशाली' इति ॥

चिन्ता पुनराचचक्षे—नूनं मत्कृते महत्येव सङ्कटे नीपातितश्चात्मा नितरामायासितः ॥

समुत्तिष्ठासुः रत्नसिंहो जगाद—विना तपो नाभीष्टसिद्धिः ।

चिन्ता रत्नसिंहमुपवेशयन्ती कोमलकरकमलेन तस्य पाणितलं परामृश्य 'नैतत्सिद्धये अकारि किमपि कार्यम् । कुतो वा वृथा निगद्यते

सत्यम् ? अबला इति मामरक्षद्भवान्। अन्यापि यदि काचन स्त्री तदाभविष्यत् तर्ह्यपि एवमेव दयालुर्महाभागः नूनमरक्षिष्यदेवेति वाहं वेद्मि। सत्ये हृद्गते कथनीये, आजन्मकौमार्येणैव स्थातव्यमिति मया निश्चितमासीत्। परं भवदीयोऽयमात्मोत्सर्गः बभञ्ज दृढामपि मे प्रतिज्ञाम्। वीरवरस्य पितुरुत्संगे पोषणमधिगतायाः मे हृदयं मरणादभीरवे एव समर्पणीयम्, नान्यस्मै सार्वभौमायापि। रसिकानां हास्यविनोदादिविलासाय मल्लानां च शक्तये न दास्यामि तिलमूल्यमपि। तेषां नटनं विनोदमात्रमेवावगच्छाम्यहम्। भवतो हृदये एव निजां त्यागशक्तिमवालोकयम्। भवतो दासीभूताऽस्मि। न केवलमद्यप्रभृति, किन्तु बहोः कालादपि॥

प्रथमा सा प्रणयरात्रिस्तयोः। प्रेमियुगलहृदयसागरे आशानुराग-तरङ्गाः अनृत्यन्।

सर्वत्र प्रासरत् प्रेममयी ज्योत्स्ना। तस्मिन् मृदुस्मितकौमुदीतेजसि विहरतोः प्रेमिचकोरयोः प्रावर्तत प्रेमालापकलकूजितम्।

प्रायो विधिर्न सहते प्रणयिनोश्चिरं विलाससुखम्। प्रणसँयल्लापपर-वशतया कमप्यननुभूतपूर्वमनिर्वाच्यं विस्मृतान्यव्यापारं आनन्दममन्दं अनुभवतोस्तयोः अकस्मात् दुर्गमुपसन्ना अरिवरूथिनीति वार्ता कर्णपथमियाय। चिन्ता संभ्रान्ता भयसहचर्यया चिन्तया। शूराग्रेसरो रत्नसिंहः स्वीचकार करे करवालम्॥

चिन्ता भयकातरतया प्रेमपूरितया दृशा विलोकयन्ती तमुवाच–'अन्ये सैनिकाः प्रहीयन्तां रिपुनिर्दलनाय। भवता नैव गन्तव्यमद्य।'

'बहवो दृश्यन्ते रिपवः।' तदहमपि यास्यामि समरभूमिम्।' इत्यावेद्य गुलिकानलिकां दधार स्कन्धे रत्नसिंहः॥

'तथा सति भवन्तमनुयास्याम्यहमपि वीरसुता वीरसतीत्वमाकाङ्क्षमाणा।'

'शत्रुबलं निर्दलयन् अचिरादेव त्वत्प्रेमकटाक्षातिथ्यमनुबु-भूषाम्यहम् । प्रणयरात्रिरियं विजयरात्रिर्भूयादिति दृश्यते किलेश्वर-सङ्केतः ।'

'कुतो वा न जाने, मनो मे विक्लवीभूतम् । भवतो रणयात्रां नानुमन्यते चेतो मदीयम् ।'

रत्नसिंहः तेन सहजसुन्दरप्रेमप्रवाहवाहिना आग्रहेण विह्वलितान्तः-करणःचिन्तां निरन्तरमाश्लिष्य समाचचक्षे-'प्रिये ! अलं भयसम्भ्रमेण, प्रभातादर्वागेव विजयश्रीसपत्न्यास्ते मधुराधरमधुपानेन रणपरिश्रमम-पनेष्यामि ।'

चिन्ता रत्नसिंहस्यांसे विन्यस्य कोमलभुजलतां बाष्पपूरितनयना न्यगादीत्-'आगमने नैव विलम्ब्यताम् । देहमात्रेणात्र स्थिताऽपि मनसा त्वामेवानुगताऽस्मि । गम्यताम् । वीरसुता वीरसती चाहं कथं निरुन्ध्य रणप्रयाणम् । प्रतिदिनं निवेद्यतां रणवार्ता चारमुखेन । समयं निरीक्ष्य रिपुरभियुज्यताम् । दूराद्दर्शनमात्रे सहसा वीरावेशेन परेष्वाक्रमणं भवतः स्वभावः । सर्वतो जागरूकतया स्थेयं प्रमादबहुले समरे । भवतः पृष्ठभागमिदानीमन्वेक्षमाणा पुनरपि अचिरादेव समरादपराङ्मुखस्य विजयिनः ते प्रसन्नं वदनं मन्दस्मितोत्फुल्लया दृशा दिदृक्षामि प्रमोदपरवती ॥

चिन्तायाः नितान्तं तान्तमासीदन्तरङ्गं दुरन्तचिन्तासन्तत्या । विजयलालसासाम्राज्ये भोगलालसा प्राधान्यं प्रापदिदानीम् । प्रतिभटान् कम्पयन्ती वीरबाला चिन्ता नितरां चकम्पे रत्नसिंहस्यात्याहितशङ्कया । रत्नसिंहं हयमारूढं विलोक्य सा मनसा प्रार्थयामास विजयाय भगवतीं कुलदेवताम् । दुर्गशिखरमारूढा यावद्दर्शनं तमेव निर्निमेषया दृष्ट्या विलोकयन्ती, अदृश्यतामुपगते च तस्मिन् तां रात्रिं तत्रैव निनाय किञ्चिदिव लब्धनिद्रा निशावसानशिशिरसमीरसम्पर्केण । सुवर्णसोदरेषु प्राभातिकेषुबाल

भास्कराकिरणेषु तरुशाखासान्धजालेभ्यः धरां स्पृशत्सु, पुनर्मोहविस्मृतिमया-सीत् । शून्यतामयासिषुर्दश दिशः । शोकानलतप्ता सा दुर्गाप्रतोऽनस्त्र शय्यायां निपत्य वसनाञ्चलेन मुखमावृत्य विललाप सा बाला दैवविहितं प्रेमपरिपाकफलमजानाना ॥

सहचरैः सैनिकैः सह रणाभिमुखं पदं निक्षिपन्नपि मनसा गृहाभि-मुख एवासीत् रत्नसिंहः चिन्ताप्रणयपाशबद्धः समागमसुखलालसागृहीत-चेताः । रमणीप्रणयो हि निरुणद्धि रणप्रवणतां पराक्रमिणोऽपि पुरुषस्य । अतः समासन्ने समराङ्गणे अनुयायिवर्गं सहसा विहाय तेनाज्ञातः क्वापि निलिल्ये रत्नसिंहः सकृदपि वा प्रणयसुखानुबुभूषया । ततश्च नायक-विहीनां शिथिलितोत्साहां चिन्तायाश्च मू सकलां शौर्यसम्भृतामपि भृशमवा-सादयद्रिपुबलं विपुलम् ॥

अथ चिन्तायाः हृदयं नैकविधाभिः शङ्काभिः पर्याकुलं कुतोऽपि कारणात् । धीरायाः तस्याः दृढं चेतः पुरा कदाऽपि नैवं दौर्बल्यमवाप । शूरपुरस्सराः बुन्देलसैनिकाः न कदाऽपि पराजीयेरन्निति दृढप्रत्ययोऽपि तस्याः अद्य शिथिलीभूतः ॥

हन्त ! अभागिन्याः तस्याः ललाटे ब्रह्मणा नैवालेखि प्रेमसुखानु-भोगः । तथा न चेत् बाल्ये एव तस्याः कुतो वा परलोकमगान्माता ! आसन्नयौवने पितापि वा कुतः तत्याज भूलोकम् । आजनकनिधनमेत-त्समयं नैकं दिनमपि सुखेन निनाय सा बाला । नाधुनापि शीतं विधेः ताण्डवनृत्यम् । दुर्बले तस्याः चेतसि किलाद्य नवीनैका प्रादुरभूद्भावना । प्रवर्तमाने समरे यदि प्रियतमं रत्नसिंहं रक्षेद्देवः तर्हि कस्मिंश्चन क्षुद्रतमे ग्रामे सानन्दमुषित्वा अनवरतं पतिदेवतामाराध्य कुर्यां जीवनसाफल्यम् । पुनरेव युद्धवार्तामपि न शृणोमि’ । एवं तस्याः हृदि प्रथममेवोद्भूदियं नारीत्वभावना ।

सन्ध्यासमयः। भगवान् भानुरपि पराजितसैनिक इव अवनतशिराः कुत्रचिदपि निलीनीभवनाय स्थानमन्वेषयन्निव बभासे। तस्मिन् व्यतिकरे कश्चनाभ्येत्य निश्शस्त्रः सैनिकः तूष्णीमतिष्ठत्। तदवलोक्यैव वज्रपात-वेदनामनुबभूव सा चिन्ता। मर्माहतेव क्षणमुपविवेश। पुनरुत्थाय तं भटं कातरस्वरेण पप्रच्छ– 'रणे केऽवशिष्टाः?'

'न कोऽपिन कोऽपि'।

चिन्ता अधोमुखी दुःखभरेण स्थातुं अशक्नुवाना भूमावुपविष्टा पुनरपृच्छत्—'किं वैरिणः समासन्नाः?'

'नितरामेव पुरसमीपमनुप्राप्ताः।'

'तथा चेत् सत्वरं सज्जीक्रियतां चिता।'

'अधुना वयं त्वत्कृते रिपुभिर्योद्धुं सन्नद्धा एव सःतृणीकृतप्राणाः।'

'यदिष्टं तत्क्रियतां भवद्भिः। मदीयं कर्तव्यं अवसितमद्य।'

'पुरद्वारं निरुद्धय चिरं योद्धुं प्रभविष्यामो वयम्। कृतमेतेन साहसेन।'

'भवतु। पराक्रमन्तां भवन्तः समरे। युद्धकथा मे परिसमाप्ता।'

दुर्गे चिता सज्जीकृता। सायं दीपप्रज्वालनसमये चिताऽपि प्रज्वालिता। साध्वी चिन्ता सर्वालङ्कारमण्डिता सहगमनवेषभूषिता अनुपम-कान्तियुता प्रसन्नचित्ता हुताशनपथेन पतिलोकयात्रां कर्तुं सज्जीबभूव।

चिन्तायाः परितः मिलितो महानेव कदम्बः दिदृक्षया स्त्रीपुरुषाणाम्। दुर्गं पर्यवृण्वन् शत्रवः, परं तत्कोऽपि नाजीगणत्। शोकसन्तापेन परिमम्लुः सर्वेषां मुखानि। कतिपयदिनेभ्यः प्राक् तस्मिन् प्रदेशे विवाहमण्टपः व्यराजत्। अद्य प्रज्वालितायाश्चितायाः स्थाने एवासीत् हवनकुण्डम्। तदाऽप्येवमेव जनाः संमिलिताः। एवमेव पावकः प्रजज्वाल। परं

अद्यतनतदानीन्तनदृश्ययोः हन्त कियदेवान्तरम्। स्थूलदृशा हुताशनकुण्डौ भिन्नावेव। परं तु वस्तुतो विचार्यमाणे, विवाहकाले प्रारब्धस्य हवनस्य पूर्णाहुतिरद्य। तदानीं विहितायाः प्रतिज्ञायाः पूर्तिरधुना।

सहसाऽश्रूयत वाजिनः खुरपुटध्वनिः। कोऽपि सैनिकः सत्वरमुपाधावत् अश्मा पतन्निव। क्षणे खुरपुटस्वरः शान्तः। कोऽपि सैनिकवेषधारी युवा प्राविशत् रंहसा तत्प्राङ्गणम्। जनाः साश्चर्यमपश्यन्। सोऽयं रत्नसिंहः।

रत्नसिंहः चितामुपगत्य कम्पमानो बभाषे —'प्रिये! अद्यापि प्राणिमि; किमिदमारब्धं त्वया?'

तदा प्रज्वलितप्राया चिता, चिन्ताया वसनतो निस्सृताः अग्रे ज्वालाः। रत्नसिंहश्च उन्मत्त इव चितां प्रविश्य चिन्तायाः पाणिमादाय समुत्थापयितुं उदयुङ्क्त त्वरया। जनाश्च सानन्दं चितायाः कानिचित् काष्ठानि अहृत्य दूरतः चिक्षिपुः। परं चिन्तादेवी न ददर्श चक्षुरुन्मील्य तम्। केवलं करसंज्ञया पश्चाद्गन्तुमसूचयत्।

रत्नसिंहः शुचाक्रान्तः अब्रवीत्—'हन्त! प्रिये! कोऽयं व्यामोहस्ते! जीवत्यपि मयि वल्लभे वल्लभे! किमिदमनुचितमाचरितम्? दृशाऽपि नानुगृह्णासि माम्। किमिदम्?'

निर्ययौ चितायाः शब्दः —'भवतो नाम स्यात् रत्नसिंहः इति। परं भवान् न मदीयो रत्नसिंहः।'

'प्रियतमे! तावदवलोकय माम्। भवत्याः चरणदास उपासको वल्लभश्चास्मि।'

'मदीयः शूरः पतिराजः वीरस्वर्गे निवसत्यधुना।'

'हन्त! हन्त! कथं प्रतिबोधयाम्यात्मानम्? अयि जनाः!

प्रशमयत शीघ्रतरं ज्वलितं वैश्वानरम् । प्रिये ! अहमेव त्वदीयो रत्नसिंहोऽस्मि । कथं न मां प्रत्यभिजानासि ?'

कृशानोर्ज्वालाः चिन्तायाः मुखं परिवव्रुः । मुखकमलं अग्निना कबलितम् । चिन्ता स्पष्टस्वरेणाह—'सर्वं जानामि, भवान् न मे रत्नसिंहः सत्यं स शूरः आसीत् । आत्मरक्षणाय एतत्तुच्छदेहरक्षणाय आत्मनः क्षत्रियधर्मात् न कदाऽपि प्रच्यवति । यस्याहं चरणदासी, स रत्नसिंहः विभ्राजते देवलोके । मा दूषय रत्नसिंहस्य नाम । स वीरो रजपूतः । भयात् रणाङ्गणाद्द्रुतो न क्लीबः ।'

चरमशब्दे समुच्चार्यमाणे एव ज्वलनज्वालाः समाच्छादयन् चिन्तायाः शिरः । क्षणादेव सा अनुपमरूपा, सा वीरतायाः आदर्शायमाना उपासिका, सा साध्वीशिरोमान्या निलिल्ये जातवेदसि ॥

रत्नसिंहो विभ्रान्त इव ददर्श तं भीकरं दृश्यम् । अन्ततश्चैकं निश्वासं निस्सार्य प्राविशच्चिताम् ॥

अहो ! प्राचीनानां आर्यललनानां ओजस्विता ! ॥

## सती चिन्तादेवी

## ಕಠಿಣ ಶಬ್ದಾರ್ಥಗಳು

लब्धजनुः–ಜನ್ಮ ಪಡೆದವಳು. तन्द्रा–ಆಲಸ್ಯ–ತೂಕಡಿಕೆ.

जृम्भ–ಆಕಳಿಕೆ. अवसर–ಅವಕಾಶ–ಸಮಯ.

पर्याणं–ಜೀನು. अतीयाय–ಕಳೆಯಿತು.

मृदा–ಮಣ್ಣಿನಿಂದ. अनैषीत्–ಕಳೆದಳು.

जरठः–ಮುದುಕ. न अश्रावि–ಕೇಳಲ್ಪಡಲಿಲ್ಲ.

विह्वलान्तरा–ದುಃಖತುಂಬಿ. जनयिता–ತಂದೆ.

अज्ञासीत्–ತಿಳಿದಳು. परलोकातिथ्यं–ಮರಣವನ್ನು.

शोकवारिदेन–ಕಂಬನಿಯಿಂದ (ಕೂಡಿದ ಕಣ್ಗಳಿಂದ).

यदि अत्यक्षत्-ಬಿಟ್ಟಿದ್ದರೆ. परिदेवनं-ವ್ಯಥೆ.

व्याजहार-ಹೇಳಿದನು. न आयास्यतां-ಕಷ್ಟಕ್ಕೀಡಾಗುವುದು ಬೇಡ.

अनुचिकीर्षामि-ಅನುಕರಿಸ ಬಯಸುತ್ತೇನೆ.

धारातीर्थे-ಶಕ್ತಿಯ ಅಲಗೆಂಬ ಪವಿತ್ರ ತೀರ್ಥದಲ್ಲಿ.

प्रत्यर्थिनः-ಶತ್ರುಗಳು. निकृतिः-ಅವಮಾನ.

वाजिवरः-ಶ್ರೇಷ್ಠವಾದ ಕುದುರೆ. कृत्तः-ಕತ್ತರಿಸಲ್ಪಟ್ಟ.

कन्दुकक्रीडा-ಚೆಂಡಾಟ. आहवे-ಯುದ್ಧದಲ್ಲಿ

निशितकरवालेन-ತುಂಬ ಹರಿತವಾದ ಕತ್ತಿಯಿಂದ

कबन्धात्-ಮುಂಡದಿಂದ. व्यतीयुः-ಕಳೆದವು.

न पुरः सरेयुः-ಮುನ್ನುಗ್ಗದಿದ್ದಾಳು. क्लीबानां-ನಪುಂಸಕರ.

वीरमधुकराः-ವೀರರೆಂಬ ದುಂಬಿಗಳು.

पर्यवृण्वन्-ಮುತ್ತಿದವು. स्पृहयालुः-ಆಸೆಯುಳ್ಳ-ಬಯಕೆಯುಳ್ಳ.

हीरायमाणः-ವಜ್ರದಂತೆ ಇರುವ. अवलेपः-ಗರ್ವ.

आत्मकत्थनं-ಸ್ವಪ್ರಶಂಸೆ. जघ्निवान्-ಕೊಂದವನು.

व्यभ्राजतां-ವಿಶೇಷವಾಗಿ ಶೋಭಿಸುತ್ತಿದ್ದವು-ಕಂಗೊಳಿಸುತ್ತಿದ್ದವು.

समौत्कण्ठ्येन-ಸಮನಾದ ಹೆಬ್ಬಯಕೆಯಿಂದ.

विभावरीं-ರಾತ್ರಿಯನ್ನು. परे-ಇತರರು.

न अद्वेट्-ದ್ವೇಷಿಸಲಿಲ್ಲ (द्विष् धातु लङ्. प्र. ए.)

पर्यन्वयुङ्क्त-ಪ್ರಶ್ನಿಸಿದನು. सन्ततिः-ಪ್ರವಾಹ, ಸಮೂಹ.

निशीथः-ರಾತ್ರಿ. अभियोक्तुं-ಆಕ್ರಮಣಮಾಡಲು.

न अज्ञायि-ತಿಳಿಯಲ್ಪಡಲಿಲ್ಲ. मुधा-ವ್ಯರ್ಥ.

उदन्तं-ಸುದ್ದಿಯನ್ನು. श्वापदाः-ಕಾಡುಮೃಗಗಳು.

सन्दिदिहिरे-ಅನುಮಾನಿಸಿದರು. मकरः-ಮೊಸಳೆ.

स्वापवशतां–ನಿದ್ರಾವಶತೆಯನ್ನು.

अजागरीत्–ಎಚ್ಚರವಾಗಿದ್ದನು. व्यासङ्गः–ಅಭ್ಯಾಸ.

कोशात्–ಒರೆಯಿಂದ. करवालं–ಖಡ್ಗವನ್ನು.

व्यापारयामास–ಪ್ರಯೋಗಿಸಿದನು. मिथः–ಪರಸ್ಪರ.

कटकं–ಶಿಬಿರ, ಡೇರೆ. परासुं–ಸತ್ತವನಾದ.

वृत्तं–ನಡೆದದ್ದನ್ನು. अवागच्छत्–ತಿಳಿದಳು.

नयनकासारतः–ಸರೋವರದಂತಿದ್ದ ಕಣ್ಣಿಳಿಂದ.

अश्रुकुल्या–ಕಣ್ಣೀರಿನ ಕಾಲುವೆ. ग्रथितां–ಪೋಣಿಸಲ್ಪಟ್ಟ-ಕಟ್ಟಲ್ಪಟ್ಟ.

न उन्ममील–ಕಣ್ಣು ತೆರೆಯಲಿಲ್ಲ. अभियोत्स्यमानं–ಎದುರುಬೀಳಲಿರುವ.

सविधे–ಬಳಿಯಲ್ಲಿ. वीजयन्तीं–ಬೀಸುತ್ತಿರುವ

अरुणिमा–ಕೆಂಪು. निशाम्य–ಕೇಳಿ.

बभाण–ಹೇಳಿದಳು. प्राद्योतत–ಹೊಳೆಯಿತು.

विदारयेरन्–ಸೀಳಿಯಾರು. समजनि–ಉಂಟಾಯಿತು.

प्रत्ययः–ನಂಬಿಕೆ. समुत्तिष्ठासुः–ಎದ್ದೇಳಲಿಚ್ಛಿಸಿದ.

उपवेशयन्ती–ಕುಳ್ಳಿರಿಸುತ್ತ. आत्मोत्सर्गः–ಆತ್ಮಸಮರ್ಪಣೆ.

मरणादभीरवे–ಮರಣಕ್ಕೆ ಅಂಜದಿರುವವನಿಗೆ.

मल्लानां–ಜಟ್ಟಿಗಳ. अवालोकयं–ಕಂಡೆನು.

अरिवरूथिनी–ಶತ್ರುಸೈನ್ಯ. इयाय–ಸೇರಿತು.

प्रहीयन्तां–ಕಳುಹಿಸಲ್ಪಡಲಿ. गुलिकानलिकां–ಬಂದೂಕನ್ನು.

स्कन्धे दधार–ಹೆಗಲಿಗೇರಿಸಿದನು. अनुबुभूषामि–ಅನುಭವಿಸಲು ಇಚ್ಛಿಸುತ್ತೇನೆ.

समाचचक्षे–ಹೇಳಿದನು. सपत्नी–ಸವತಿ.

निरुन्ध्यां–ತಡೆಯಲಿ. दिदृक्षामि–ನೋಡಬಯಸುತ್ತೇನೆ.

प्रमोदपरवती–ಸಂತೋಷಪರವಶಳಾಗಿ. तान्तं–ಮುದುಡಿದ.

प्रापत्-ಪಡೆಯಿತು. अत्याहितशङ्कया-ಅಮಂಗಳದ ಭೀತಿಯಿಂದ.

निर्निमेषया-ಎವೆಯಿಕ್ಕದೆ. शिशिरसमीरः-ತಂಗಾಳಿ.

अयासिषुः-ಹೋದವು. निपत्य-ಬಿದ್ದು.

अजानाना- ತಿಳಿಯದವಳಾಗಿ. निरुणद्धि-ತಡೆಯುತ್ತದೆ.

निलिल्ये-ಮರೆಯಾದನು. चमूं-ಸೈನ್ಯವನ್ನು.

अवासादयत्-ಕೊಂದಿತು. न पराजीयेरन्-ಸೋಲಲಿಕ್ಕಿಲ್ಲ.

नैव अलेखि-ಬರೆಯಲ್ಪಟ್ಟಿರಲಿಲ್ಲ. अगात्-ಹೋದಳು.

आसन्नयौवने-ಯೌವನ ಬಂದಾಗ. उषित्वा-ವಾಸಮಾಡಿಕೊಂಡು.

निलीनीभवनाय-ಮರೆಯಾಗಲು. व्यतिकरे-ಸಂದರ್ಭದಲ್ಲಿ. अवसितं-ಮುಗಿಯಿತು.

हुताशनः-ಬೆಂಕಿ-ಅಗ್ನಿ. कदम्बः-ಗುಂಪು.

नाजीगणत्-ಲೆಕ್ಕಿಸಲಿಲ್ಲ. परिमम्लुः-ಬಾಡಿದವು.

पावकः-ಬೆಂಕಿ-ಅಗ್ನಿ. स्थूलदृशा-ಸ್ಥೂಲದೃಷ್ಟಿಗೆ-ಮೇಲ್ನೋಟಕ್ಕೆ. अश्मा-ಕಲ್ಲು.

रंहसा-ವೇಗದಿಂದ. वसनतः-ಬಟ್ಟೆಯಿಂದ.

समुत्थापयितुं-ಎಬ್ಬಿಸಲು. उदयुङ्क्त-ತೊಡಗಿದನು.

शुचा-ಶೋಕದಿಂದ. वैश्वानरः-ಬೆಂಕಿ-ಅಗ್ನಿ.

प्रतिबोधयामि-ಪ್ರಮಾಣೀಕರಿಸಲಿ.

न प्रत्यभिजानासि-ಪತ್ತೆಹಚ್ಚುತ್ತಿಲ್ಲ, ಗುರ್ತಿಸುತ್ತಿಲ್ಲ.

कृशानुः-ಬೆಂಕಿ. न प्रच्यवति-ಜಾರುವುದಿಲ್ಲ.

रणाङ्गणात् द्रुतः-ಯುದ್ಧರಂಗದಿಂದ ಓಡಿಹೋದನು.

ओजस्विता-ಧೀರತನ.

# ಪ್ರಶ್ನೆಗಳು

1. ಪ್ರಾಚೀನ ಭಾರತೀಯ ನಾರಿಯರ ಪರಾಕ್ರಮ ಗಾಥೆಯನ್ನು ಚಿಂತಾದೇವಿಯ ಉದಾಹರಣೆಯಿಂದ ಸ್ಪಷ್ಟಪಡಿಸಿರಿ.

2. ಸತಿ ಚಿಂತಾದೇವಿಯ ಪರಾಕ್ರಮವನ್ನು ಬಣ್ಣಿಸಿರಿ.

3. ಚಿಂತಾದೇವಿ ಮತ್ತು ರತ್ನಸಿಂಹರ ನಿರತಿಶಯ ಪ್ರೇಮವನ್ನು ಚಿತ್ರಿಸಿರಿ.

## ಲಘು ಟಿಪ್ಪಣಿ ಬರೆಯಿರಿ :

1. ರತ್ನಸಿಂಹ
2. ಚಿಂತಾದೇವಿಯ ದೇಶಪ್ರೇಮ
3. ಚಿಂತಾದೇವಿಯು ಮೆಚ್ಚಿದ ರತ್ನಸಿಂಹ.

## 'उत्तररामचरितकथासङ्ग्रहः'

ಪಂಡಿತ ವಿ. ಅನಂತಾಚಾರ್ಯರು ಗದ್ಯರೂಪದಲ್ಲಿ ಬರೆದಿರುವ ಮತ್ತೊಂದು ಪ್ರಸಿದ್ಧ ನಾಟಕ 'ಭವಭೂತಿಯ ಉತ್ತರರಾಮಚರಿತ'.

ಕ್ರಿ. ಶ. ಸುಮಾರು ಏಳನೆಯ ಶತಮಾನದಲ್ಲಿ ಜೀವಿಸಿದ್ದನೆನ್ನಲಾದ ಕವಿ ಭವಭೂತಿ, ತನ್ನ ನಾಟಕಗಳ ಪ್ರಸ್ತಾವನೆಯಲ್ಲಿಯೇ ಸಂಕ್ಷಿಪ್ತವಾಗಿ ತನ್ನ ಜೀವನ ವಿಚಾರವಾದ ಕೆಲವಂಶಗಳನ್ನು ತಿಳಿಸಿದ್ದಾನೆ.

ಭವಭೂತಿಯ ಮೂಲ ಹೆಸರು ಶ್ರೀಕಂಠ. ಕಾವ್ಯನಾಮ ಭವಭೂತಿ. ದಕ್ಷಿಣಾಪಥದ ಪದ್ಮಪುರ ಈತನ ಊರು. ಉದುಂಬರ ವಂಶದ ಶ್ರೋತ್ರಿಯರಾದ ಸೋಮಯಾಜಿಗಳ ಸುಪುತ್ರನಾಗಿ ಜನಿಸಿದ ಈತ ವ್ಯಾಕರಣ, ನ್ಯಾಯ, ವೇದಾಂತ ಮೀಮಾಂಸೆಗಳಲ್ಲಿ ಉದ್ದಾಮ ಪಂಡಿತನಾಗಿದ್ದನು. ಈತ ಮೂರು ನಾಟಕಗಳಾದ— ಮಾಲತೀ ಮಾಧವ, ಮಹಾವೀರ ಚರಿತ, ಹಾಗೂ ಉತ್ತರರಾಮಚರಿತೆಗಳನ್ನು ರಚಿಸಿದ್ದಾನೆ.

ಏಳು ಅಂಕಗಳಿಂದ ಕೂಡಿದ ಉತ್ತರರಾಮಚರಿತೆ ರಾಮಾಯಣದ ಉತ್ತರ ಕಾಂಡದಿಂದ ಆಯ್ದ ಭಾಗವನ್ನು ಕಥಾವಸ್ತುವಾಗಿ ಹೊಂದಿದೆ.

'एको रसः करुण एव निमित्तभेदात्'

ಈ ಪ್ರಕಾರವಾಗಿ ಕರುಣರಸಪ್ರಧಾನವಾದ ಈ ನಾಟಕವನ್ನು ರಚಿಸಿದ್ದಾನೆ.

ಮೂಲ ಕಥಾವಸ್ತುವಿನಲ್ಲಿ ಹಲವಾರು ಬದಲಾವಣೆಗಳನ್ನು ಮಾಡಿದರೂ, ಸೀತಾಪರಿತ್ಯಾಗ ಭಾಗದಿಂದ ಆರಂಭಿಸಿ, ಲವಕುಶರ ಜನನ, ವಾಲ್ಮೀಕಿಯ ಆಶ್ರಮದಲ್ಲಿ ಅವರಿಬ್ಬರ ವಿದ್ಯಾಭ್ಯಾಸ, ರಾಮನು ಕೈಗೊಳ್ಳುವ ಅಶ್ವಮೇಧಯಾಗ, ದಂಡಕಾರಣ್ಯದಲ್ಲಿ ಶಂಬೂಕರಾಕ್ಷಸನ ಹನನ, ವಾಲ್ಮೀಕಿಯ ಆಶ್ರಮಕ್ಕೆ ಜನಕ, ವಸಿಷ್ಠ, ಕೌಸಲ್ಯೆ ಮೊದಲಾದವರ ಆಗಮನ, ಗಂಗಾತೀರದಲ್ಲಿ ವಾಲ್ಮೀಕಿಯು ರಾಮನ ಸಮಕ್ಷಮದಲ್ಲಿ ಏರ್ಪಡಿಸುವ ಸೀತಾಪರಿತ್ಯಾಗದ ಮುಂದಿನ ಕಥೆಯ ಪ್ರದರ್ಶನ, ಸಾಕ್ಷಾತ್ ಭೂದೇವಿಯೇ ಮಹಾಜನರೆದುರು ಸೀತೆಯು ಪವಿತ್ರಳೆಂದು ಸಾರಿ, ಆಕೆಯನ್ನು ರಾಮನಿಗೆ ಒಪ್ಪಿಸುವ ಹಲವಾರು ಪ್ರಸಂಗಗಳು ಓದುಗರ ಮನ ಸೆಳೆಯುವಂತೆ ಹೃದಯಂಗಮವಾಗಿ ಇಲ್ಲಿ ಚಿತ್ರಿಸಲ್ಪಟ್ಟಿದೆ.

## उत्तररामचरितकथासङ्ग्रहः

पुरा खलु उदीर्णेन रावणेन उपप्लुतैः देवैः अभ्यर्थितः भगवान् श्रियःपतिः अयोध्यायां कोसलसुताकुमारभावेन अवतीर्य पौलस्त्यवधं व्याजीकृत्य शरणागतसंरक्षणरूपं परमधर्मं अवनीतले प्रवर्तयामास ।

अथ सकलं राक्षसकुलं विजित्य चिरविरहपर्युत्सुकया सीतया देव्या सर्वैः सुहृद्भिश्च समेतः पुष्पकं विमानमारुह्य अयोध्यां प्रत्यागत्य वसिष्ठभरतशत्रुघ्नादिभिः ससम्भ्रममुपरचितसंविधानं अभिषेकमहोत्सवं अन्वभूत् । तत्र लङ्कासमरसुहृदः सर्वान् वानरान् राक्षसांश्च यथोचितं संमान्य स्वगृहान् प्रति प्रेषयामास । नानादिगन्तेभ्यः समागतान् ब्रह्मर्षीन् राजर्षींश्च सविशेषं सम्भाव्य विससर्ज । मिथिलेश्वरो जनकोऽपि बहून् दिवसान् उत्सवेन नीत्वा अनुष्ठाननित्यत्वेन अपकृष्टस्वातन्त्र्यः आपन्नसत्त्वामपि दुहितरमामन्त्र्य मिथिलां प्रति ययौ ॥

अथ रघुपतौ कुलक्रमागतं अयोध्याराज्यं निर्बाधं परिपालयति सति भगवान् शान्तापतिः ऋश्यशृङ्गः द्वादशवार्षिकं सत्रमारेभे । तदनुरोधात् सर्वा राममातरः कठोरगर्भां जानकीं तद्विनोदार्थं रामभद्रं च अयोध्यायां स्थापयित्वा, भगवन्तं अरुन्धतीजानिं पुरस्कृत्य ऋश्यशृङ्गाश्रमं प्रययुः ।

क्रातपयादवसापगमानन्तरं अष्टावक्रो नाम महर्षिः भगवत्याः अरुन्धत्याः राममातृणां भगवतो वसिष्ठस्य च सन्देशमादाय रामभद्रं एवमबोधयत 'भगवती अरुन्धती जनन्यश्च त्वामेवमादिशन्ति वत्सायाः जानक्याः यदि गर्भदोहदो भवति, सः अवश्यं अचिरादेव माननीयः' इति ॥

भगवान् वसिष्ठस्तु एवमाह—'अचिराधिष्ठितं राज्यं छिद्रबाहुल्यात् दुर्निरीक्ष्यम् । सर्वथा प्रजानामनुरञ्जने युक्तो भव ।' इति ।

अथ कदाचित् लक्ष्मणः जनकस्य वियोगेन दुर्मनायमानां सीतां विनोदयितुं अर्जुनं नाम चित्रकारमाहूय 'आर्यस्य श्रीरामभद्रस्य चरितं कस्याञ्चित् वीथिकायां विलिख' इत्याज्ञप्तवान् । सोऽपि यथाज्ञप्तं भगवत्याः वैदेह्याः हुताशनविशुद्धिपर्यन्तं विलिलेख ।

तत् आलेख्यगतं आत्मीयं चरितं लक्ष्मणेन प्रदर्श्यमानं रामभद्रः सीतया सहितः ददर्श । तत्र भगवता विश्वामित्रेण प्रसादीकृतानि जृम्भकास्त्राणि, मिथिलावृत्तान्तः, नूतनदारपरिग्रहणं, चतुर्णां भ्रातृणां अयोध्याप्राप्तिः, कैकेयीवृत्तान्तः, गुहसमागमः, जनस्थानवृत्तान्तः, मलयवति पर्वते वर्षासमयः, वानरराक्षसानां अपरिमितानि उत्तरोत्तराणि कर्माश्चर्याणि इत्येतानि अपदानानि वर्तमानानीव पश्यन्, सीतया सह रामभद्रः नितरां ननन्द ॥

एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदा जानकी पुनरपि प्रसन्नशिशिरसलिलायां भागीरथ्यां अवगाहनं प्रशान्तगम्भीरासु वनराजिषु विहरणं च अनुभवितुं आचकांक्ष । अचिरेणैव सम्पादनीयः दोहदः इति गुरुभ्यः श्रुतवान् रामभद्रः तत् तथेत्यभ्युपगम्य 'अस्खलितसम्पातं रथं उपस्थापय' इति लक्ष्मणं आदिदेश ।

रथमानेतुं प्रयाते लक्ष्मणे परिश्रमजनितया निद्रया अपहृतचेतना जानकी वातायनोपकण्ठे रामबाहुमुपधानीकृत्य संविश्य सुष्वाप ।

अत्रान्तरे पौरजानपदेषु अपसर्पतया प्रहितः दुर्मुखो नाम शुद्धान्तचारी समागत्य रामभद्रं एवं व्यजिज्ञपत्–'देव ! देव्याः वैदेह्याः रक्षोगृहवासप्रयुक्तं दूषणं जनाः कथयन्ति । अग्निशुद्धिं तु दूरवृत्तां न विश्वसन्ति' इति ।

कश्मलामिमां किंवदन्तीं श्रुत्वा लोकाराधनतत्परः रामः सुभृशाभितप्तहृदयः दुर्मुखं एवं आबभाषे दुर्मुख ! लक्ष्मणमेवं मद्वचनात् ब्रूहि–सम्प्रत्येव गुरुभिरुपदिष्टम् 'अस्याः गर्भदोहदः अचिरात् सम्पादनीय' इति, 'प्रजानामनुरञ्जने सावधानेन भवितव्यम्–इति च तदिमां सापवादां दोहदसम्पादनव्याजेन वनं प्रापय्य विसर्जय' इति । तथेति दुर्मुखे निष्क्रान्ते, लवणेन असुरेण उपप्लुताः यमुनातीरवासिनः महर्षयः रामभद्रं त्रातारमभिजग्मुः । तत् विदित्वा लवणस्योन्मूलनाय शत्रुघ्नं प्रेषयामास ॥

अथ सीतया उपधानीकृतं बाहुं शनैराकृष्य समुत्थाय सीतामसहायां विसृज्य दुःखेन निर्जगाम । अथ. लक्ष्मणः सुप्तोत्थितां सीतां रथमारोप्य वनं प्रापय्य, बाष्पगद्गदकण्ठः रुदन्नेव भ्रातुराज्ञां निवेद्य शोकातिरेकजनितया मूर्च्छया भूमौ पतितां चिरात् लब्धसंज्ञां, बाहुयुगलमुत्क्षिप्य क्रन्दमानां उदश्रुः भगवतो वाल्मीकेः तपोवनोपकण्ठे विसृज्य निववृते । अथ तथाविधमवस्थान्तरं आपन्ना सा सीतादेवी प्राप्तप्रसववेदनमात्मानं अतिदुःखसंवेगात् गङ्गाप्रवाहे निक्षिप्तवती । तस्मिन्नेव अन्तर्जलं दारकद्वयं प्रसूता सा भगवतीभ्यां पृथ्वीभागीरथीभ्यां उत्सङ्गितैकैकदारकाभ्यां अभ्युपपद्य रसातलं नीता । स्तन्यत्यागात्परेण भगवती भागीरथी दारकयोः क्षत्रियोचितानि कर्माणि कर्तुं भगवन्तं वाल्मीकिं अभ्यर्थयामास । स च भगवान् वाल्मीकिः तौ कुमारौ सादरमादाय धात्रीनिर्विशेषं परिपोषयन् निर्वृत्तचौलकर्मणोः त्रयीवर्जं इतरासु विद्यासु निष्ठां अवापयामास ।

समनन्तरं एकादशे वर्षे क्षात्रेण कल्पेन उपनीय त्रयीविद्यामपि अध्यापितवान् ॥

अथ एकदा स्नानार्थं तमसातीरमनुप्राप्तः भगवान् प्राचेतसः तत्र द्वन्द्वचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानं पश्यत्। तद्दर्शनेन नितरां खिन्नमानसस्य तस्य वदनात् आकस्मिकप्रत्यवभासा आनुष्टुभेन छन्दसा परिच्छिन्ना सरस्वती निर्जगाम—

'मानिषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकं अवधीः काममोहितम् ॥'

इति ॥ अथ अनेन विचित्रेण सरस्वतीविलासेन विस्मितान्तरङ्गः भगवान् वाल्मीकिः अभिषेकक्रिया निर्वर्त्य आत्मनः पर्णशालामवाप्य, तमेव यदृच्छया अवतीर्णं आनुष्टुभं श्लोकं मनसा पुनः पुनः आवर्तयन् आस्त।

ततश्च भगवान् भूतभावनः पद्मयोनिः साक्षादाविर्भूय 'ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि, तत् ब्रूहि रामचरितम्। प्रकाशाप्रकाशानि सर्वाणि रामचरितानि अव्याहतज्योतिषि प्रतिभाचक्षुषि ते प्रतिभास्यन्ति' इत्युक्त्वा अन्तर्दधे। वाल्मीकिरपि यथोपदिष्टं प्रागग्रेषु दर्भेषु उपविश्य समाधिदृष्ट्या सर्वलोकैकवीरस्य रामभद्रस्य हसितभाषितादीनि सर्वाणि चेष्टितानि परिज्ञाय श्रीरामायणाख्यं अदिकाव्यं प्रणिनाय। तच्च काव्यं तौ किन्नरस्वनौ कुमारौ कुशलवौ अध्यापयामास। तौ च मेधाविनौ कुमारौ तपोवनवासिनां ऋषीणां समीपे काव्यमिदं मधुरेण स्वरेण अगायताम्।

गान्धर्वविद्यातत्त्ववेदिभ्यां ताभ्यामुपगीयमानं तत् श्रुत्वा सर्वे मुनयः चिरनिर्वृत्तमपि रामभद्रस्य चरितं प्रत्यक्षमिव पश्यन्तः परां प्रीतिं अवापुः ॥

अथ भगवान् वाल्मीकिः स्वकृतेः रामायणस्य रसवत्तरं सन्दर्भान्तरं अभिनयार्हं स्वहस्तलिखितं कृत्वा तत्प्रयोगाय तौर्यत्रिकसूत्रधारस्य भरतस्य मुनेः सकाशं शिष्यहस्तेन प्रेषितवान् । तेषां प्रमादोच्छेदनार्थं ज्येष्ठं सीताकुमारं कुशं चापपाणिं आनुयात्रिकं विससर्ज । अथ कुमारयोः कुशलवयोः द्वादशस्य संवत्सरस्य पूर्तौ भगवती भागीरथी जनकात्मजां एवमुवाच—'वत्से ! आयुष्मतोः कुशलवयोः आयुरारोग्याभिवृद्धये भवत्याः पुराणश्वशुरं मानवस्य राजर्षिवंशस्य प्रसवितारं देवं सवितारं स्वहस्तापचितैः पुष्पैः उपतिष्ठस्व । तदर्थं अवनिपृष्ठवर्तिनीं भवतीं अस्मत्प्रभावात् वनदेवता अपि न द्रक्ष्यन्ति, किं पुनः मर्त्याः ? त्वयि प्रकृष्टप्रेमा तमसा अपि तव प्रत्यनन्तरीभविष्यति' इति ॥

अथ यथादिष्टं जानकी दारुणेन दीर्घशोकेन ग्लापितं क्षामक्षामं शरीरं उद्वहन्ती, सशरीरा विरहवेदनेव गोदावरीह्रदात् निश्चक्राम । अत्रान्तरे भगवान् ऋश्यशृङ्गः द्वादशवार्षिकं सत्रं परिसमाप्य सर्वान् अभ्यागतान् सम्पूज्य विसर्जयामास । अरुन्धतीवसिष्ठौ राममातरश्च 'अयोध्यायां अलीकपौरापवादोद्विग्नः रामभद्रः आसन्नप्रसववेदनां सीतादेवीं एकाकिनीं अरण्ये परितत्याज' इत्युपश्रुत्य 'न वयं वैदेहीविरहितां अयोध्यां प्रवेक्ष्यामः' इति निश्चित्य वाल्मीकेः तपोवनं उपजग्मुः ॥

अथ रामभद्रः हिरण्मयीं सीताप्रतिकृतिं सहधर्मचारिणीं विधाय अश्वमेधं क्रतुं उपक्रम्य वसिष्ठशिष्येण वामदेवेन अनुमन्त्रितं मेध्याश्वं विसृज्य तद्रक्षणाय चतुरङ्गबलसमन्वितं अवाप्तदिव्यास्त्रसम्प्रदायं लक्ष्मणात्मजं चन्द्रकेतुं प्रेषितवान् ॥

अथ एकदा कोऽपि मृतं पुत्रं उत्क्षिप्य आदाय राजद्वारि सोरस्ताडनं अब्रह्मण्यं उद्घोषितवान् । ततः राजापचारमन्तरेण न प्रजानां अकालमृत्युः

भवतीति आत्मनः दोषं निरूपयति करुणामये रामभद्रे, सहसैव अशरीरिणी वाक् एवं आविरभूत्—

शम्बूको नाम पृथिव्यां तप्यते तपः।

शीर्षच्छेद्यः स ते राम! तं हत्वा जीवय द्विजम्॥ इति।

तदुपश्रुत्य जगत्पतिः रामभद्रः कृपाणपाणिः चिन्तितोपस्थितं विमानमारुह्य सर्वाः दिशः विदिशश्च चरितुं आरब्धवान्। अथ दण्डकायां जनस्थाने तं शम्बूकं धूमपं अधोमुखं तपस्यन्तं समासाद्य, कृपाणेन तच्छिरः छित्त्वा मृतं शिशुं संजीवयामास। सम्प्राप्तदिव्यदेहः शम्बूकः श्रीरामभद्रं शिरसा प्रणम्य बह्वीभिः भूतार्थव्याहाररूपाभिः स्तुतिभिः उपश्लोक्य, पुराणब्रह्मर्षिं भगवन्तं अगस्त्यं उपसृत्याभिवाद्य सद्यः समुपस्थितं विमानमारुह्य स्वं लोकमवाप। रामभद्रोऽपि परिचितपूर्वान् प्रशान्तपावनगम्भीरान् वैदेहीसहवासविस्रम्भ-साक्षिणः दण्डकारण्यभूमिभागान् अभिवीक्ष्य नितरां पर्याकुलहृदयः इतस्ततः परिबभ्राम॥

शोकमात्रद्वितीयोऽयं रामभद्रः नानाविधविहारसाक्षिणः गोदावरी-तीरकाननप्रदेशान् आसाद्य, सीताऽनुस्मरणेन नितरां पर्याकुलहृदयः 'हा सीते! हा दण्डकारण्यवासप्रियसखि! हा विदेहराजपुत्रि! इत्यादि विलपन्—शोकातिरेकेण द्रवीभूतहृदयः मूर्च्छया अपहृतचेतनः छिन्नमूलः तरुरिव भूमौ निपपात। दैवात् तत्समीपवर्तिनी तमसाद्वितीया भागीरथीप्रसादेन वनदेवतानामप्यदृश्या जानकी जलभरभरितमेघस्तनितगम्भीरं अदसीयं भारतीनिर्घोषमाकर्ण्य शङ्कितहृदया सरभसमुपसृत्य हरिचन्दनपल्लवकल्पेन स्नेहार्द्रशीतलेन पाणिना श्रीरामभद्रं मृदु पस्पर्श। हृदि प्रसिक्तेन सञ्जीवनौ-षधिरसेनेव सकलेन्द्रियसन्तर्पणेन तत्करस्पर्शनसंज्ञां प्रतिपद्य श्रीरामभद्रः चक्षुरुन्मील्य सर्वतः विलोकयामास॥

अथ सर्वतः शून्यमरण्यं अभिवीक्ष्य 'अहो किमिदमाश्चर्यम्! निष्करुणः निर्भरगर्भखिन्नां सीतां विवासयन् अहं अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः। सकलेन्द्रियसंमोहनोऽयं स्पर्शः परिचितपूर्व इव प्रतिभाति, तत् कुतः इदानीं प्रियतमास्पर्शहेतुभूतं भागधेयम्? इत्यादि बहुधा विकल्पयन् आस्त। अथ सीतादेव्याः प्रियसखी वासन्ती नाम वनदेवता परिचिततत्तत्प्रियवस्तुसन्दर्शनात् सञ्जातं अन्तःकरणावेगं अन्तर्नियन्तुमपारयन्तं रामभद्रं बहुधा सान्त्वयामास। तमसाद्वितीया सीताऽपि तयोः वासन्तीरामभद्रयोः परस्परसंवादं अलक्षितैव श्रुत्वा, कुमारयोः कुशलवयोः वर्षवर्धनमङ्गलानि निर्वर्तयितुं भागीरथीतीरं जगाम। अतिगम्भीरस्य शोकावेगस्य प्रतीकारमन्यमपश्यन् रामभद्रः अश्वमेधसहधर्मचारिणीं हिरण्मयीं सीताप्रतिकृतिं दृष्ट्वा बाष्पदिग्धं चक्षुः विनोदयिष्यामीति वासन्तीमामन्त्र्य विमानराजमारुह्य प्रतस्थे। सीतादेव्याः तादृशं दैवदुर्विपाकं उपश्रुत्य सञ्जातवैराग्यः चन्द्रद्वीपतपोवने पराकसान्तपनप्रभृतीनि तपांसि तप्यमानः पुराणराजर्षिः जनकोऽपि तस्मिन्नेव समये चिरन्तनप्रियसुहृदं प्राचेतसं द्रष्टुं अभ्याजगाम। अनेकसंवत्सरातिक्रमेऽपि प्रतिक्षणपरिभावनया प्रत्यग्रमिव स्पष्टनिर्भासं दारुणं दुःखसंवेगं अनुभवतः वैदेहस्य तत्र कौसल्यादर्शनं क्षते क्षारोत्सेचनमिव असह्यवेदनमभूत्। तथैव सीतागतया चिन्तया कृशीभूतदेहां अन्यामिवोपलक्ष्यमाणां कौसल्यां जनकदर्शनसञ्जातः शोकातिरेकः मूर्च्छितां अकरोत्॥

अत्रान्तरे वाल्मीकिशिष्याः सर्वे वटवः शिष्टानध्ययनमहोत्सवं खेलनेन सम्भावयन्तः कोलाहलमकुर्वन्। तेषां मध्ये विहरन्तं नीलोत्पलश्यामलेन उज्ज्वलेन देहबन्धेन गम्भीरेण स्वरेण च रामभद्रस्यानुहरमाणं कनीयांसं सीताकुमारं लवं दृष्ट्वा, सर्वे सीताबन्धवः तं स्वसमीपमानाययामासुः। आनाय्य च 'तव मातापितरौ ब्रूहि' इति पप्रच्छुः। स तु 'नाहं स्मरामि मातरं पितरं वा' 'भगवतः वाल्मीकेः शिष्योऽहमिति तु जानामि' इत्युवाच। अस्मिन् समये लक्ष्मणात्मजः चन्द्रकेतुः आश्वमेधिकस्याश्वस्य संरक्षणप्रसङ्गेन

सुमन्त्रसारथिं रथं आरुह्य ससैन्यः वाल्मीकेस्तपोवनमाजगाम । कौतूहला-क्रष्टहृदयैः तपोवनवटुभिः 'कस्यायमश्वः ?' इति पृष्टे, 'सर्वलोकैकवीरस्य असहायशूरस्य पौलस्त्यकुलधूमकेतोः महाराजरामभद्रस्य' इति सैनिकैः अवोचि । तमेनं अश्वानुयात्रिकाणां श्री रामभद्रप्रतापाविष्करणं वीरवादम-मृष्यमाणः लवः सर्वैः तपोवनवटुभिः सहितः तमश्वं लोष्टैरभिहत्य परावर्तयितुं आरेभे । अपूर्वारण्यदर्शनकुतूहलाक्षिप्तहृदयः चन्द्रकेतुः आश्वमेधिकस्य अश्वस्य कदनमभिवीक्ष्य, धनुष्पाणिः तान् वटून् निर्भर्त्सयामास । दुर्दान्तः लवोऽपि कार्मुकमादाय युद्धाय सन्नद्धः बभूव । पदातिः असहायः लवः सर्वैः सैनिकैः समेत्य पर्यवष्टब्धः स्वतः प्रत्यवभासं जम्भकास्त्रं मनसा सस्मार । तेन च सर्वान् सैनिकान् संस्तम्भयामास ॥

अथ कुमारयोस्तयोः विचित्रैः दिव्यास्त्रयोगैः अनिर्णयजयापजये द्वन्द्वयुद्धे प्रवर्तमाने, शम्बूकवधात् प्रतिनिवृत्तः रामभद्रः मध्येमार्गं कुमार-चन्द्रकेतुं अभियुज्यमानमभिवीक्ष्य युद्धभूमौ कुमारयोर्मध्ये विमानमवतारयामास । तद्दर्शनमात्रेणैव विनीतः चन्द्रकेतुः सम्प्रहाराद्विरम्य तमभिवादयामास । पुण्यानुभावदर्शनस्य महापुरुषस्यास्य दर्शनेन सञ्जातविनयः लवः तदानीमेव भरताश्रमात् प्रतिनिवृत्तः कुशश्च तं रामायणकथापुरुषं रामभद्रं विज्ञाय सविनयमुपसृत्य 'भगवतः प्राचेतसस्य अन्तेवासिनौ कुशलवौ आवामभिवादयावहे' इति स्वनामोच्चारणपूर्वकं अभिवादयामासतुः ॥

अथ कमलगर्भकोमलेन शरीरेण माङ्गल्यमृदङ्गमांसलेन कण्ठध्वनिना प्रसन्नसिंहस्तिमितेन वीक्षितेन सर्वात्मना आत्मसंवादिना आकृतिविशेषेण च विराजमानौ तौ कुमारौ दृष्ट्वा आकस्मिकेन तारामैत्रकेण आबद्धचक्षुः श्रीरामभद्रः अतिमात्रवात्सल्यद्रवीभूतहृदयः प्रसारिताभ्यां बाहुभ्यां तौ कुमारौ आकृष्य निर्भरं आलिलिङ्ग ॥

अथ तत्र पूर्वमेव ऋश्यशृङ्गाश्रमात् समागतैः कौसल्याप्रभृतिभिः जननीजनैः अरुन्धतीवसिष्ठाभ्यां जनकेन च समं उपसंगम्य ताभ्यां कुमाराभ्यां

उपगीयमानं भगवता वाल्मीकिः सरस्वतीनिष्यन्दं रामायणं शुश्राव। तौ कुमारौ आपन्नसत्त्वायाः सीतायाः विवासनपर्यन्तं कथाभागं चिरनिर्वृत्तमपि वर्तमानमिवानुभूयमानं मधुरमधुरेण वाङ्मयेन प्रदर्श्य, 'उपरितनं सीतावृत्तान्तं प्रकाशयितुं भगवान् वाल्मीकिरेव प्रमाणं' इत्युक्त्वा विरेमतुः।

अथ श्रीरामभद्रः मनस्येवं विचारयामास—नूनं एताभ्यां कुमाराभ्यां सीतागर्भसम्भवाभ्यां भवितव्यम्। इदं हि प्राचेतसाध्युषितमरण्यम्। यत्र सा देवी परित्यक्ता। इयं च अनयोः भूयिष्ठं असत्संवादिनी आकृतिः। अनयोः स्वतःप्रकाशानि जृम्भकास्त्राणि। मम च अपरिचितयोरप्येनयोरुपरि निरतिशयः चक्षूरागः इत्येतत्सर्वं मदीयामेव सम्भावनां उपोद्बलयति। किं करोमि ? कं पृच्छामि ?' इति॥

इत्थं विचिन्तयति श्रीरामभद्रे भगवान् भूतार्थवादी प्राचेतसः समागत्य रामभद्रं एवमुवाच—यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं करुणाद्भुतरसं किञ्चिदुपनिबद्धं, तच्च अभिनयार्हं अप्सरोभिः भगवान् प्रयोजयिष्यति। तदर्थं भागीरथीतीरं उपगम्य समाजसंनिवेशः कर्तव्यः। सर्वे च पौरजानपदाः लक्ष्मणेन सह तत्र संनिधापयितव्याः—इति। रामभद्रश्च वाल्मीकिगौरवात् सद्य एव अयोध्यातः लक्ष्मणमाहूय सर्वाणि संविधानानि सविशेषं अकारयत्। सदेवासुरतिर्यगुरगनायकाः मर्त्यामर्त्याः सर्वे भूतग्रामाः वाल्मीकिना प्रभावेण संनिधापिताः रसभरभरितं तं प्रयोगं प्रेक्षितुं सकुतूहलाः समाजग्मुः॥

कुशलवावपि श्रीरामभद्रस्य नियोगं अनुसृत्य लक्ष्मणेन चन्द्रकेतुसदृशीं स्थानप्रतिपत्तिं लम्भितौ प्रेक्षकौ अभूताम्। अत्र प्रथमं सूत्रधारः प्रविश्य 'भगवतः वाल्मीकेः सरस्वतीनिष्यन्दस्य रामायणस्य रसवत्तरः सन्दर्भः प्रयोक्ष्यते, तत्र कार्यगौरवात् भवद्भिः अवधातव्यम्।' इति प्रस्तावनामकरोत्। अथ महावने लक्ष्मणेन परित्यक्तां आसन्नप्रसववेदनां श्वापदैः अभिलप्यमानशरीरां अशरणां भागीरथ्यामात्मानं निक्षिप्तवतीं तत्रैव दारक-

द्वयं प्रसूतां सीतामवलम्ब्य पृथ्वीभागीरथीदेव्यौ एकैकं दारकं उत्सङ्गे कृत्वा प्रविश्य तामेवमाश्वासयामासतुः ।

'समाश्वसिहि कल्याणि ! दिष्ट्या वैदेहि वर्धसे ।
अन्तर्जलं प्रसूतासि रघुवंशधरौ सुतौ ॥'

इति ॥ सीता तु तत् श्रुत्वा दिष्ट्या दारकौ प्रसूताऽस्मि । हा आर्यपुत्र इत्युक्त्वा मूर्च्छिता बभूव । अथ प्रतिपन्नसंज्ञां तथाविधमवस्थान्तरमापन्नां सीतां दृष्ट्वा देवी विश्वम्भरा निर्भरमालिङ्ग्य मूर्च्छिता बभूव । साऽपि भागीरथ्या समाश्वासिता एवमाह-'देवि ! सीतां प्रसूय कथमाश्वसिमि ? केवलं असदृशं कर्म अनुष्ठितं रामभद्रेण ।

न प्रमाणीकृतः पाणिः बाल्ये बालेन पीडितः ।
नाहं न जनको नाग्निः नानुवृत्तिर्न सन्ततिः ॥

इति ॥ तां च भागीरथी एवं प्रत्युवाच च–'प्रसीद भगवति वसुन्धरे । किमसंविदानेव संसारस्य जामात्रे कुप्यसि ? कुलमिदमिक्ष्वाकूणाम्, यत् सर्वो लोकः सर्वात्मना समाराधनीयः । तत् किं करोतु वत्सो रामभद्रः ।' इति ।

अथ नेपथ्ये कलकलशब्दसंमिश्रं अन्तरिक्षं विद्युदुद्योतितमिव जज्वाल । तद्विज्ञाय पृथ्वीभागीरथ्यौ एवमब्रूताम्–पूर्वमयोध्यायां आपन्नसत्त्वां सीतां विनोदयितुं लक्ष्मणः रामभद्रचरितानि आलेख्ये लेखयामास । तद्दर्शनसमये भगवतो विश्वामित्रस्य प्रादुर्भूतानि जृम्भकास्त्राण्यभिवीक्ष्य रामभद्रः सीतामेवमुवाच–सर्वथा । इमान्यस्त्राणि त्वत्प्रसूतिमुपस्थास्यन्ति' इति । तथैव तानि सन्ति कुमारौ उपस्थातुं प्रादुर्भूतानि' इति ॥

अथ सीता 'कः एतयोः क्षत्रियोचितानि कर्माणि करिष्यति ?' इति चिन्तामापेदे । भगवती भागीरथी तामेवमाश्वासयामास 'वत्से ! किं तवानया चिन्तया ? एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेर्रपयिष्यामि । स एवानयोः क्षत्रकृत्यानि करिष्यति ।' इति ॥ अथ

सीता मातरमेवमभ्यर्थयामास 'नयतु मामात्मनोऽङ्गेषु विलयमम्बा। न सहेऽहं ईदृशं परिभवमनुभवितुम्' इति। पृथ्वी तु–'वत्से। स्तन्यत्यागं यावत् मन्नियोगतः पुत्रौ अवेक्षस्व। परेण तु यथा रोचते तथा करिष्यसि—इति।

एवं सम्यगभिनीतं कथावस्तु अभिवीक्ष्य, रामलक्ष्मणौ यदा 'जन्मसिद्धजृम्भकास्त्रौ अवाप्तवाल्मीकिशिष्यभावौ श्रीरामभद्रतुल्याकारौ द्वादशवयःपरिमाणौ कुशलवौ नूनं सीतागर्भसम्भवावेव' इत्युत्प्रेक्षेते, तदा पृथ्वीभागीरथीसीताः झटिति निश्चक्रमुः। समाप्तश्च अन्तर्नाटिकाभिनयः॥

अथ रामः 'कथं विलय एव वैदेह्याः सम्पन्नः। हा देवि। दण्डकारण्यवासप्रियसखि। हा चरित्रदेवते। लोकान्तरं पर्यवसितासि।' इत्युक्त्वा मूर्च्छितः भूमौ निपपात। लक्ष्मणः 'हा किमिदमत्याहितम्। भगवन्, वाल्मीके? परित्रायस्व परित्रायस्व आर्यं रामभद्रम्' इति उच्चैः आचक्रन्द॥

अथ वाल्मीकिना अनुज्ञाता भगवती अरुन्धती रामभद्रस्य सकाशं नीत्वा वत्से। तव पाणिना स्पृष्ट्वा रामभद्रं सञ्जीवय इत्युवाच। तया तथैवकृते समाश्वस्तो रामः सानन्दं 'भोः किमेतत्?' इति वदन् चक्षुरुन्मीलयामास।

अथ अरुन्धती एवमुच्चैरावभाषे—भो भोः पौरजानपदाः! इयमधुना भगवतीभ्यां जाह्नवीवसुन्धराभ्यां प्रशस्य मह्यं समर्पिता, पूर्वं च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा, ब्रह्मादिभिश्च देवैः स्तुता देवयजनसम्भवा जानकी परिगृह्यते। कथं भवन्तो मन्यन्ते?' इति। एवमरुन्धत्या निर्भर्त्सिताः सर्वाः प्रजाः सीतां नमश्चक्रुः। लोकपालाः देवर्षयश्च पुष्पवृष्टिभिः उपतस्थिरे। अथ अरुन्धती सीतां पाणिना गृहीत्वा रामभद्रमुपसृत्य जगत्पते! रामभद्र!—

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम् ।

हिरण्मय्याः प्रतिकृतेः पुण्यप्रकृतिमध्वरे ॥

इत्याज्ञापयामास । तदानीमेव वाल्मीकिः कुशलवौ आनाय्य समुपसृत्य 'वत्सौ । कुशलवौ । एषः रघुपतिः पिता युवयोः । लक्ष्मणः कनिष्ठतातः । सीता च जननी । अयं च राजर्षिः जनकः मातामहः' इत्युक्त्वा रामाय अर्पयामास ॥

सीतारामभद्रौ कुशलवौ गाढमालिङ्ग्य निर्भरानन्दौ सुचिरमानन्द-शीतलं बाष्पं मुमुचतुः । तदानीमेव उत्खातलवणः मधुरेश्वरः समाजगाम । अथ श्रीरामभद्रः सानुषङ्गाभिः कल्याणपरम्पराभिः उपासितः परां कोटिमानन्दस्याध्यगच्छत् ॥ इति ॥

## उत्तररामचरितकथासंग्रहः
## ಕ್ಲಿಷ್ಟಪದಗಳ ಅರ್ಥ

उदीर्णं-ಕೊಬ್ಬಿದ. उपप्लुत-ತೊಂದರೆಗೊಳಗಾದ.

पौलस्त्यवधं-ರಾವಣನ ವಧೆ. व्याजीकृत्य-ನೆಪವಮಾಡಿ.

संभाव्य-ಗೌರವಿಸಿ. अपकृष्ट-ಕಳೆದುಕೊಂಡ.

आपन्नसत्वा-ಗರ್ಭಿಣಿ. सत्रं-ದೀರ್ಘಕಾಲದ ಯಜ್ಞ.

अरुन्धतीजानि-ಅರುಂಧತಿಯ ಪತಿಯಾದ ವಸಿಷ್ಠರನ್ನು.

कठोरगर्भां-ತುಂಬು ಗರ್ಭಿಣಿಯಾದ. गर्भदोहदः-ಗರ್ಭದ ಬಯಕೆ.

छिद्रबाहुल्यात्-ಶತ್ರುಗಳು ಹೆಚ್ಚಾಗಿರುವುದರಿಂದ.

दुर्निरीक्ष्यं-ಪಾಲಿಸಲಾಶಕ್ಯ. दुर्मनायमानं-ಖಿನ್ನಳಾದ.

वीथिकायां-ಚಿತ್ರಗೃಹದಲ್ಲಿ (Picture Gallery)

हुताशनविशुद्धिः-ಅಗ್ನಿಪರೀಕ್ಷೆ. अपदानानि-ಘಟನೆಗಳು.

अस्खलितसम्पातं-ಅಡೆತಡೆಯಿಲ್ಲದೆ ಸುಸೂತ್ರವಾಗಿ ಚಲಿಸುವ.

उपकण्ठे-ಬಳಿಯಲ್ಲಿ. उपधानीकृत्य-ದಿಂಬುಮಾಡಿಕೊಂಡು.

संविश्य सुष्वाप–ಮಲಗಿ ನಿದ್ರಿಸಿದಳು. अपसर्पतया–ಗೂಢಚಾರನಾಗಿ.

शुद्धान्तचारी–ಅಂತಃಪುರದಲ್ಲಿ ಓಡಾಡುವ (ಕಂಚುಕಿ)

रक्षोगृहं–ರಾಕ್ಷಸನ ಮನೆ. दूरवृत्तां–ದೂರದಲ್ಲೆಲ್ಲೋ ಸಂಭವಿಸಿದ.

किंवदन्तीं–ಗಾಳಿಮಾತನ್ನು. सुभृशाभितप्तहृदयः–ಬಹಳ ನೊಂದ ಹೃದಯವುಳ್ಳವ ನಾಗಿ. उदश्रुः–ಕಂಬನಿತುಂಬಿದ ಕಣ್ಣುಳ್ಳ.

निववृते–ಹಿಂತಿರುಗಿದನು. उत्सङ्गितैककदारकाभ्यां–ಮಡಿಲಲ್ಲಿ ಒಂದೊಂದು ಮಗುವುಳ್ಳವರಾದ,

अभ्युपपद्य–ಒಯ್ದು: धात्रीनिर्विशेषं–ದಾದಿಯ ರೀತಿಯಲ್ಲಿ;

त्रयी—ಮೂರುವೇದಗಳು, क्षात्रेण कल्पेन—ಕ್ಷತ್ರಿಯರಿಗೆ ಉಚಿತವಾದ ರೀತಿಯಿಂದ. प्राचेतसः—ವಾಲ್ಮೀಕಿ,

प्रत्यवभास—ಸ್ಫೂರ್ತಿ परिच्छिन्ना—ಕೂಡಿದ,

सरस्वतीविलासेन—ವಾಗ್ದೇವಿಯ ವಿಲಾಸದಿಂದ.

अव्याहतज्योतिषि—ತಡೆಯಿಲ್ಲದ ಕಾಂತಿಯನ್ನು ಹೊಂದಿರುವ.

प्रागग्रेषु—ಪೂರ್ವದಿಕ್ಕಿಗೆ ತುದಿಯಿರುವ. प्रणिनाय—ರಚಿಸಿದನು.

किन्नरस्वनौ—ಕಿಂನರರಂತೆ ಇಂಪಾದ ಸ್ವರವುಳ್ಳ. गान्धर्वविद्यातत्त्व—ಸಂಗೀತ ವಿದ್ಯೆಯ ರಹಸ್ಯ.

उपगीयमानां—ಹಾಡಲ್ಪಡುತ್ತಿದ್ದ. चिरनिर्वृत्तं—ಬಹಳ ಹಿಂದೆಯೇ ಮುಗಿದಿದ್ದ. सन्दर्भान्तरं—ಬೇರೆಬೇರೆ ಪ್ರಸಂಗಗಳನ್ನು.

तौर्यत्रिकं–ಕುಣಿಯುವುದು, ಹಾಡುವುದು, ನುಡಿಸುವುದು ಎಂಬ ಮೂರರಿಂದಲೂ ಕೂಡಿದ ನಾಟ್ಯ.

भूतभावनः—ಬ್ರಹ್ಮದೇವ. प्रमादोच्छेदनार्थं—ತಪ್ಪನ್ನು ತೊಡೆದುಹಾಕಲು.

आनुयात्रिकं—ಹಿಂಬಾಲಕನನ್ನು. पुराणश्वशुरं—ಹಿರಿಯಮಾವನಾದ.

अपचितैः—ಕೊಯ್ದು–ಸಂಗ್ರಹಿಸಿದ. उपतिष्ठस्व—ಆರಾಧಿಸು.

अवनिपृष्ठवर्तिनीं—ಭೂಮಿಯ ಮೇಲೆ ನಿಲ್ಲುವ.

प्रकृष्टप्रेमा—ಅಪಾರ ಪ್ರೇಮವುಳ್ಳ. प्रत्यनन्तरी—ಪಕ್ಕದಲ್ಲಿರುವವಳಾಗಿ,

जल्पितं—ಹಾಡಿದ. ह्रदात्—ಮಡುವಿನಿಂದ.

अलीकं—ಸುಳ್ಳು. आजग्मुः—ಬಂದು ಸೇರಿದರು.

विधाय—ತಯಾರುಮಾಡಿಕೊಂಡು. क्रतुं—ಯಜ್ಞವನ್ನು.

मेध्याश्वं—ಯಜ್ಞಾರ್ಹವಾದ ಕುದುರೆಯನ್ನು. उत्क्षिप्य—ಎತ್ತಿಕೊಂಡು.

सोरस्ताडनं—ಎದೆಬಡಿದುಕೊಳ್ಳುತ್ತ. वृषलः—ಶೂದ್ರ.

कृपाणपाणिः—ಕೈಯಲ್ಲಿ ಕತ್ತಿಯನ್ನು ಹಿಡಿದವನಾಗಿ.

धूमपं—ಹೊಗೆಯನ್ನು ಕುಡಿಯುತ್ತಿದ್ದ. उपश्लोक्य—ಸ್ತುತಿಸಿ.

द्रवीभूतहृदयः—ಕರಗಿದ ಹೃದಯವುಳ್ಳವನಾಗಿ.

छिन्नमूलः—ಕತ್ತರಿಸಿದ ಬೇರುಳ್ಳ. स्तनितं—ಗುಡುಗು.

अदसीयं—ಇವನ (ಈ ರಾಮನ) भारतीनिर्घोषं—ಗುಡುಗಿನಂತಿರುವ ಮಾತನ್ನು

विवासयन्—ತ್ಯಜಿಸುತ್ತ. भागधेयं—ಅದೃಷ್ಟ.

विकल्पयन्—ವಿಧವಿಧವಾಗಿ ಊಹಿಸುತ್ತ.

अन्तः नियन्तुं—ಒಳಗೆ ತಡೆಯಲು. अपारयन्तं—ಶಕ್ತನಾಗದಿದ್ದ. वर्षवर्धनं—ಹುಟ್ಟುಹಬ್ಬ.

बाष्पदिग्धं—ಕಂಬನಿತುಂಬಿದ. दैवदुर्विपाकं—ದುರ್ವಿಧಿಯನ್ನು.

पराकसान्तपनादिः—ಪರಾಕ, ಸಾಂತಪನ ಮೊದಲಾದ ಬೇರೆಬೇರೆ ತಪಸ್ಸುಗಳು.

प्रत्यग्रमिव – ಹೊಸದಂತೆ.

स्पष्टनिर्भासं—ಸ್ಪಷ್ಟವಾಗಿ ಹೊಳೆಯುವ. क्षते क्षारोत्सेचनमिव—ಗಾಯಕ್ಕೆ ಒಂದಿಷ್ಟು ಉಪ್ಪುಹಾಕುವಂತೆ.

उपलक्ष्यमाणं—ತೋರುತ್ತಿದ್ದ. शिष्टानध्ययनमहोत्सवं—ಶ್ರೇಷ್ಠರಾದವರು ಬಂದಾಗ ನೀಡಲಾಗುವ ರಜೆ.

सम्भावयन्तः—ಆಚರಿಸುತ್ತ. अनुहरमाणां—ಹೋಲುತ್ತಿದ್ದ.

आनाययामासुः—ಕರೆತರಿಸಿದರು. पौलस्त्यकुलधूमकेतोः—ರಾವಣನ ವಂಶಕ್ಕೇ ಧೂಮಕೇತುವಿನಂತಿದ್ದ.

अवोचि—ನುಡಿಯಲ್ಪಟ್ಟಿತು. अमृष्यमाणः – ಮನ್ನಿಸದೇ–ಒಪ್ಪದೇ.

लोष्टैः अभिहत्य परावर्तयितुं—ಮಣ್ಣಿನ ಹೆಂಟೆಗಳಿಂದ ಹೊಡೆದು ಹಿಂತಿರುಗಿಸಲು.
कदनं—ಯುದ್ಧ-ಕಲಹ.
निर्भर्त्सयामास—ಗದರಿಸಿದನು. दुर्दान्तः—ಯಾರಿಗೂ ಜಗ್ಗದ.
कार्मुकं—ಧನುಸ್ಸನ್ನು-ಬಿಲ್ಲನ್ನು. पर्यवष्टब्धः—ಸುತ್ತುವರಿಯಲ್ಪಟ್ಟ.

स्वतः प्रत्यवभासं—ತಾವಾಗಿಯೇ ಗೋಚರಿಸುವ.
संस्तम्भयामास—ನಿಲ್ಲಿಸಿದನು. पुण्यानुभावदर्शनस्य—ಶುಭ ಪ್ರಭಾವವನ್ನು ಬೀರುತ್ತಿದ್ದ ನೋಟವುಳ್ಳ.
अन्तेवासिनौ—ಶಿಷ್ಯರಿಬ್ಬರು. आत्मसंवादिना—ತನ್ನನ್ನು ಹೋಲುವ.
आकस्मिकतारामैत्रकेण आबद्धचक्षुः—ಆಕಸ್ಮಿಕವಾದ ಕಣ್ಣೋಟದಿಂದಲೇ ಉಕ್ಕಿದ ಪ್ರೀತಿಯಿಂದ ನೆಟ್ಟನೋಟವುಳ್ಳ.
सरस्वतीनिष्यन्दं—ಮಾತಿನ ಹೊನಲನ್ನು. वाङ्मयेन—ಸಾಹಿತ್ಯದಿಂದ.
विरेमतुः—ವಿರಮಿಸಿದರು.
चक्षूरागः—ಕಣ್ಣಿನ ಕೆಂಪು. उपोद्बलयति—ಸಮರ್ಥಿಸುತ್ತದೆ-ದೃಢಪಡಿಸುತ್ತದೆ.
भूतार्थवादी-ನಡೆದಿದ್ದನ್ನು ನುಡಿಯುವ.

उपनिबद्धं—ಬರೆಯಲ್ಪಟ್ಟಿದೆ. समाजसंनिवेशः—ಪ್ರೇಕ್ಷಕರನ್ನು ಸೇರಿಸುವಿಕೆ.
संनिधापयितव्याः—ಬರಮಾಡಲ್ಪಡಬೇಕು.
आहूय—ಕರೆದು. अकारयत्—ಮಾಡಿಸಿದನು.
उरगः—ಹಾವು. भूतग्रामाः—ಎಲ್ಲ ಪ್ರಾಣಿಗಳ ಸಮೂಹ.
लम्भितौ—ಪಡೆದವರಾದ. तिर्यक्—ಚತುಷ್ಪಾದಿ.
अवधातव्यं—ಗಮನ ಹರಿಸಬೇಕು. श्वापदैः—ಹುಲಿಮೊದಲಾದ ಕ್ರೂರಮೃಗಗಳಿಂದ.
रघुवंशधरौ—ರಘುವಂಶವನ್ನು ಉದ್ಧರಿಸುವ.
विश्वंभरा—ಭೂದೇವಿ. निर्भरं—ಗಾಢವಾಗಿ.
प्रसूय—ಹಡೆದು. न प्रमाणीकृतः—ಪ್ರಮಾಣಪಡಿಸದೇ.
असंविदानेव—ತಿಳಿಯದವಳಂತೆ. विद्युदुद्योतामिव—ಮಿಂಚು ಬೆಳಗಿದಂತೆ.
आलेख्ये—ಚಿತ್ರದಲ್ಲಿ.
उपस्थातु—ಇರಲು. क्षत्रकृत्यानि—ಕ್ಷತ್ರಿಯೋಚಿತ ಸಂಸ್ಕಾರಗಳು.
आत्मनोऽङ्केषु—ತನ್ನೊಳಗೆ. परिभवं—ಅವಮಾನವನ್ನು.
मन्नियोगतः—ನನ್ನ ಆದೇಶದಂತೆ.
उत्प्रेक्षेते—ಊಹಿಸುತ್ತಾರೆ. झटिति—ತಕ್ಷಣವೇ.

पर्यवसितासि—ಹೊರಟಿದ್ದೀಯೆ. आचक्रन्द—ಗೋಳಿಟ್ಟಳು.

समाश्वस्तः—ಸಮಾಧಾನಗೊಂಡ. उपतस्थिरे—ಪ್ರತ್ಯಕ್ಷರಾದರು.

सानुषङ्गाभिः—ಒಂದಕ್ಕೊಂದು ಸಂಬಂಧಿಸಿದ.

अध्वरे—ಯಜ್ಞದಲ್ಲಿ. निर्भरानन्दौ—ಆನಂದ ತುಂಬಿ.

उत्खातलवणः—ಲವಣಾಸುರನನ್ನು ಕೊಂದುಹಾಕಿದ.

मधुरेश्वरः—ಶತ್ರುಘ್ನನು. परां कोटिं—ತುತ್ತತುದಿಯನ್ನು. अभ्यगच्छत्—ಹೊಂದಿದನು.

## उत्तररामचरितकथा
## ಪ್ರಶ್ನೆಗಳು

1) ಜನಾಪವಾದದಿಂದ ತ್ಯಜಿಸಿದ ಸೀತೆಯನ್ನು ಶ್ರೀರಾಮನು ಪುನಃ ಹೇಗೆ ಸ್ವೀಕರಿಸುತ್ತಾನೆ ? ನಿರೂಪಿಸಿರಿ.

2) ಸೀತಾಪರಿತ್ಯಾಗದನಂತರ ರಾಮನು ಅನುಭವಿಸುವ ಮೂಕವೇದನೆಯನ್ನು ನಿರೂಪಿಸಿರಿ.

3) ರಾಮ ಮತ್ತು ಸೀತೆಯರ ಪುನಃಸಮಾಗಮಕ್ಕೆ ಕಾರಣವಾಗುವ ಸನ್ನಿವೇಶಗಳನ್ನು ನಿರೂಪಿಸಿರಿ.

4) ಉತ್ತರ ರಾಮಚರಿತ ಕಥಾಸಂಗ್ರಹದಲ್ಲಿ ಶಂಬೂಕವಧೆಯ ಪ್ರಸಂಗದವರೆಗೆ ಬರುವ ಸನ್ನಿವೇಶಗಳನ್ನು ವಿವರಿಸಿರಿ.

### ಲಘು ಟಿಪ್ಪಣಿ ಬರೆಯಿರಿ :

1) ಕ್ರೌಂಚವಧ ಪ್ರಸಂಗ
2) ಚಿತ್ರದರ್ಶನ ಪ್ರಸಂಗ
3) ಬ್ರಹ್ಮನ ಆಗಮನ
4) ಸೀತೆಯ ಪತಿಪ್ರೇಮ
5) ಶಂಬೂಕನ ವಧೆಯ ಪ್ರಸಂಗ
6) ರಾಮನ ಪಾತ್ರ ಚಿತ್ರಣ
7) ವಾಲ್ಮೀಕಿ
8) ಚಂದ್ರಕೇತು
9) ಭಾಗೀರಥಿ
10) ಲವಕುಶ.

# परिशिष्टविभागः

## मार्गदर्शिनी प्रश्नपत्रिका

## ಮಾದರಿ ಪ್ರಶ್ನಪತ್ರಿಕೆ

## MODEL QUESTION PAPER

### II Pre–University

### SANSKRIT

**Duration : 3 Hours** **Max. Marks : 100**

ಸೂಚನೆ : ಸಂಸ್ಕೃತದಲ್ಲಿ ಕೇಳಲಾಗಿರುವ ಪ್ರಶ್ನೆಗಳಿಗೆ ಉತ್ತರವನ್ನು ಸಂಸ್ಕೃತದಲ್ಲಿಯೇ ಬರೆಯುತಕ್ಕದ್ದು.

**Note :** Questions in Sanskrit should be answered in Sanskrit only.

1 द्वादशानाम् एकैकवाक्येन संस्कृतभाषया उत्तराणि लिखत ।

१) रामायणकथाधारे भासस्य रूपके के ? 12

२) उदयनः कः ?

३) पद्मावती कस्य स्वसा ?

४) भासविरचितस्य बालचरितस्य कथामूलं किम् ?

५) विदूषकस्य नामधेयं किम् ?

६) ऐश्वर्ययुक्तं स्वामिनं लोकः किमर्थं सेवते ?

७) क्षपणकस्य निजनाम किम् ?

८) अङ्गुलीयके कस्य नाम लिखितमासीत् ?

९) चन्दनदासस्य वृत्तिः का ?

१०) निपुणकः किं कार्यम् उद्दिश्य नियुक्तः आसीत् ?

११) शकटदासः कः ?

१२) भट्टनारायणस्य उपनाम किम् ?

हिडिम्बा।

१३) राक्षसदम्पत्योः स्वामिनी का ?

१४) हिडिम्बया कृतं संविधानं किम् ?

१५) कृपः कस्य मातुलः ? अश्वत्थाम्नः

१५) क्षितीशवंशः केन स्थापितः ?

2 a) ಭಾಸನ ನಾಟಕಗಳಲ್ಲಿ ಕಂಡುಬರುವ ಸಾಮ್ಯಾಂಶಗಳಾವುವು ?

What are the common features found in the plays of Bhasa ?

ಅಥವಾ or

ಚಾಣಕ್ಯನ ಪಾತ್ರವನ್ನು ಚಿತ್ರಿಸಿರಿ.

Sketch the character of Chanakya.

b) ಇವುಗಳಲ್ಲಿ ಯಾವುದಾದರೂ ಎರಡನ್ನು ಕುರಿತು ಲಘು ಟಿಪ್ಪಣಿಗಳನ್ನು ಬರೆಯಿರಿ.

Write short notes on *any two* of the following :

i) युधिष्ठिरः ii) प्रवेशकः iii) विदूषकः

iv) चन्दनदासः

3 ಇವುಗಳಲ್ಲಿ ಯಾವುದಾದರೂ ಮೂರು ಪದ್ಯಗಳನ್ನು ಭಾಷಾಂತರ ಸಹಿತ ವಿವರಿಸಿರಿ 12

Translate and explain any *three* of the following :

(i) दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्तभिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥

ii) रूपश्रिया समुदितां गुणतश्च युक्ता
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।

पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि ॥

iii) आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य ।
जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥

iv) स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।
बाष्पं प्रवृत्तं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥

v) विक्रान्तैर्नयशालिभिस्सुसचिवैः श्रीवक्रनासादिभिः
नन्दे जीवति या तदा न गमिता स्थैर्यं चलन्ती मुहुः ।
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्ती जगत्
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्तुं व्यवस्येत्पृथक् ॥

4 ಇವುಗಳಲ್ಲಿ ಯಾವುದಾದರೂ ನಾಲ್ಕನ್ನು ಸಂದರ್ಭಸಹಿತ ವಿವರಿಸಿರಿ :
Explain with reference to the context any *four* of the following :

१) तस्योपकारे शक्तस्त्वं किं जीवन् किमुतान्यथा ?
२) क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ।
३) अकरुणाः खल्वीश्वराः ।
४) तां पद्मिनीं हिमहतामिव चिन्तयामि ।
५) प्रतिज्ञाभारः मम दर्शनेन निष्फलः संवृत्तः ।
६) न हि सर्वः सर्वं जानाति ।

5 a) ಆಕಸ್ಮಿಕವಾಗಿ ಚಿತ್ರದಲ್ಲಿ ನೋಡಿದ ಮಾಲವಿಕೆಯನ್ನು ಪಡೆಯುವಲ್ಲಿ ರಾಜನಾದ ಅಗ್ನಿಮಿತ್ರನು ಹೇಗೆ ಸಫಲನಾಗುವನೆಂಬುದನ್ನು ನಿರೂಪಿಸಿರಿ. 10

Show how king Agnimitra becomes successful in securing Mālavikā whom he has accidentally seen in a portrait.

ಅಥವಾ or

ಪ್ರಾಚೀನ ಭಾರತೀಯ ನಾರಿಯರ ಪರಾಕ್ರಮದ ಕಥೆಯನ್ನು ಚಿಂತಾದೇವಿಯ ಉದಾಹರಣೆಯಿಂದ ಸ್ಪಷ್ಟಪಡಿಸಿರಿ.

Bring out the heroic qualities of the women of ancient India through the story of Chintadevi.

b) ಇವುಗಳಲ್ಲಿ ಎರಡನ್ನು ಕುರಿತು ಲಘು ಟಿಪ್ಪಣಿಗಳನ್ನು ಬರೆಯಿರಿ :

Write short notes on any *two* of the following : 8

i) क्रौञ्चवधप्रसङ्गः ii) रत्नसिंहः

iii) धारिणी iv) आयुर्वेदः

6 A. एतेषु 'चतुर्णाम् उपप्रश्नानाम् उत्तरं संस्कृतभाषया लिखत । 12

अ) त्रयाणां सन्धिं विभज्य सन्धिनाम लिखत ।

अन्यच्च, वञ्चितोऽस्मि, सन्त्यत्र, तथैव, प्रविशत्वार्यः

आ) त्रयाणां लिङ्गविभक्तिवचनानि लिखत ।

सरसि, प्रकृतयः, महता, एकया, चरणौ

इ) त्रयाणां लकारपुरुषवचनानि लिखत ।

अस्मि, कुप्य, कुर्यात्, देहि, अन्विष्यति

ई) त्रयाणां विग्रहवाक्यानि लिखत ।

यथाशक्ति, अनुभूतदुःखः, शीर्षवेदनया, धूमलताम्, धर्मवित्तरः

उ) त्रयाणां व्याकरणरीत्या पदपरिचयं कुरुत ।

प्राप्य, ताडितः, वक्तुम्, प्रसभम्, वध्यः

ऊ) प्रयोगं परिवर्तयत ।

रक्षत्येनं तु बुधयोगः ।

अथवा

ज्ञायतां किमेतत् ।

ऋ) दोषान् परिहरत ।

i) अलम् अतिप्रसङ्गः ।

ii) गच्छ भवती ।

iii) विजयतु कौरवेश्वरः ।

ॠ) यथानिर्देशं कुरुत ।

i) आवां गच्छावः । (बहुवचनरूपे लिखत ।)

ii) एषः, वत्सः, धन्यः (स्त्रीलिङ्गरूपाणि लिखत ।)

iii) निर्गतः, जितः, दृष्टः (लङ् लकाररूपाणि लिखत ।)

ए) अत्रत्यम् अलङ्कारं सलक्षणं निर्दिशत ।

1) बुद्ध्या निगृह्य वृषलस्य कृते क्रियायाम् ।

2) आरण्यकं गजमिव प्रगुणीकरोमि ।

ओ) सप्रस्तारं वृत्तं निर्दिशत ।

श्रुत्वा वधं मम मृषा सुतवत्सलेन ।

B संस्कृतभाषया परिवर्तयत ।

ವಿಶ್ವಾಮಿತ್ರನು ರಾಮಲಕ್ಷ್ಮಣರೊಡನೆ ತನ್ನ ಆಶ್ರಮಕ್ಕೆ ಹೋದಾಗ ರಾಜಕುಮಾರರಿಬ್ಬರೂ ಈ ಕಥೆಯನ್ನು ಹೇಳಿದರು– "ಮಹಾವಿಷ್ಣುವು ವಾಮನಾವತಾರವನ್ನು ತಾಳುವುದಕ್ಕೆ ಮುಂಚೆ ಇದು ಅವನ ಆಶ್ರಮವಾಗಿತ್ತು. ಅವನು ಇಲ್ಲಿ ತಪಸ್ಸು ಮಾಡಿದನು. ಬಲಿಯು ಇಂದ್ರನನ್ನು ಜಯಿಸಿದಾಗ ದೇವತೆಗಳು ವಿಷ್ಣುವಿನ ಸಹಾಯ ಕೇಳಲು ಅವನ ಬಳಿಗೆ ಬಂದರು. ಅದರಂತೆ ಅವನು ಈ ಲೋಕದಲ್ಲಿ ವಾಮನನಾಗಿ ಅವತರಿಸಿದನು. ಅವನು ಬಲಿಯ ಬಳಿಗೆ ಬಂದು ಮೂರು ಹೆಜ್ಜೆ ಭೂಮಿಯನ್ನು ಬೇಡಿದನು. ಬಲಿಯು ಅವನ ಪ್ರಾರ್ಥನೆಯನ್ನು ಈಡೇರಿಸಿದನು".

When Viswamitra, attended by Rama and Lakshmana went to his hermitage, he narrated the following story to the two princes—"In ancient days, before the dwarf incarnation of Mahavishnu, this was his holy hermitage. He performed his austerities here. When Bali conquered Indra, the Devas came to Vishnu for help. Accordingly, he took his birth in this world in form of a dwarf. Then he went to Baliand requested for a gift of as much of earth as he could step over in three steps. Bali granted this request".

C) इमं परिच्छेदं पठित्वा उत्तराणि लिखत । 8

निर्मलसरोवरे पिपासां परिहर्तुं गतः कोऽपि सारङ्गः तज्जले निजप्रतिबिम्बमपश्यत् । आत्मनश्च शाखोपशाखिशृङ्गाणां रामणीयकेन समाकृष्टमानसोऽपि कृशीभूतपादावलोकनेन लज्जाक्रान्तः । अचिन्तयत् चैवम्—"अहो मे शोचनीयता ! मादृशी सुन्दरा-

क्रांतेः काष्ठसदृशचतुष्टयचरणसमाक्षिता किल ! चरणान्यपि मे शृङ्गसदृशान्येव भवेयुश्चेत् तदा मत्समानो पशुः निखिलोऽपि भूमण्डले न विद्यते स्म"। एवं साटोपं वदन्नेव सारङ्गः मृगयाकुशलश्वानगर्जनैः सन्त्रासितः। ततश्च सहसा सः तस्मात् स्थलात् सुदूरं पलायितः। एवं सः काष्ठसदृशस्वचरणैः रक्षितः न तु रमणीयैः शृङ्गैः।

प्रश्नाः

1) सारङ्गः किमर्थं निर्मलसरोवरं गतः ?

2) सः कुतः लज्जाविष्टः अभूत् ?

3) सारंगः केन सन्त्रासितः ?

4) श्वानगर्जनैः सन्त्रासितः सारङ्गः कैः रक्षितः ?

अथवा

स्वप्रवासानुभवं वर्णयित्वा दूरे स्थिताय मित्राय पत्रमेकं लिखत।

## धातुरूपकोशः

| धातुः | गणः | पदम् | अर्थः | कर्तरि | कर्मणि/भावे | प्रेरणार्थे |
|---|---|---|---|---|---|---|
| अट् | 1 | परस्मै | ಸಂಚರಿಸು To roam | अटति | अट्यते | आटयति |
| अद् | 2 | प | ತಿನ್ನು To eat | अत्ति | अद्यते | आदयति |

अर्च् 10 उभय ಪೂಜಿಸು अर्चयति अर्च्यते अर्चयति

To worship

अर्ज् 10 उ ಗಳಿಸು अर्जयति अर्ज्यते अर्जयति

To earn

अर्थ् 10 आत्मने ಬೇಡು अर्थयते अर्थ्यते अर्थयति

To request

अर्ह् 1 प ಯೋಗ್ಯನಾಗು अर्हति अर्ह्यते अर्हयति

To deserve

अश् 9 प ತಿನ್ನು अश्नाति अश्यते आशयति

To eat

अस् 2 प ಇರು अस्ति भूयते भावयति

To be

आप् 5 प ಹೊಂದು आप्नोति आप्यते आपयति

To get

| इच्छार्थे | शतृ/शानच् | क्त/क्तवत् | क्त्वा/ल्यप् | तुम् | विध्यर्थे |
|---|---|---|---|---|---|
| अटिटिपति | अटत् | अटित | अटित्वा | अटितुम् | अटितव्य |
| | अट्यमान | अटितवन् | समट्य | | अटनीय |
| जिघत्सति | अदत् | जग्ध | जग्ध्वा | अत्तुम् | अत्तव्य |
| | अद्यमान | जग्धवत् | प्रजग्ध्य | | आद्य |
| अर्चिचिपति | अर्चयत् | अर्चित | अर्चयित्वा | अर्चयितुम् | अर्चयितव्य |
| | | अर्चितवत् | समर्च्य | | अर्चनीय |
| अर्जिजिषति | अर्जयत् | अर्जित | अर्जयित्वा | अर्जयितुम् | अर्जयितव्य |
| | | अर्जितवत् | समर्ज्य | | अर्जनीय |

| | | | | | |
|---|---|---|---|---|---|
| — | अर्थयमान | अर्थित | अर्थयित्वा | अर्थयितुम् | अर्थयितव्यम् |
| | | अर्थितवत् | समर्थ्य | | अर्थनीयम् |
| — | अर्हत् | अर्हित | अर्हित्वा | अर्हितुम् | अर्हितव्यम् |
| | | अर्हितवत् | समर्ह्य | | अर्हणीयम् |
| — | अश्नत् | अशित | अशित्वा | अशितुम् | अशितव्यम् |
| | | अशितवत् | प्राश्य | | अशनीयम् |
| बुभूषति | सत् | भूत | भूत्वा | भवितुम् | भवितव्य |
| | भूयमान | भूतवत् | संभूय | | भव्य |
| ईप्सति | आप्नुवत् | आप्त | आप्त्वा | आप्तुम् | आप्तव्य |
| | आप्यमान | आप्तवत् | प्राप्य | | आप्य |

| धातुः | गणः | पदम् | अर्थः | कर्तरि | कर्मणि/भावे | प्रेरणार्थे |
|---|---|---|---|---|---|---|
| आस् | 2 | आ | ಕುಳಿತುಕೋ<br>To sit | आस्ते | आस्यते | आसयति |
| अधि + इङ् | 2 | आ | ಓದು<br>To Study | अधीते | अधीयते | अध्यापयति |
| इण् | 2 | प | ಹೋಗು<br>To go | एति | ईयते | गमयति |
| इष् | 6 | प | ಇಚ್ಛಿಸು<br>To wish | इच्छति | इष्यते | एषयति |
| ईक्ष् | 1 | आ | ನೋಡು<br>To see | ईक्षते | ईक्ष्यते | ईक्षयति |
| एध् | 1 | आ | ವೃದ್ಧಿಹೊಂದು<br>To prosper | एधते | एध्यते | एधयति |

| | | | | | | |
|---|---|---|---|---|---|---|
| कथ् | 10 | उ | ಹೇಳು To tell | कथयति कथयते | कथ्यते | कथयति |
| कम्प् | 1 | आ | ಅಲ್ಲಾಡು To shake | कम्पते | कम्प्यते | कंपयति |
| कांक्ष् | 1 | उ | ಇಚ್ಛೆಪಡು To wsih | कांक्षति कांक्षते | कांक्ष्यते | कांक्षयति |
| कुप् | 4 | प | ಸಿಟ್ಟಾಗು To be angry | कुप्यति | कुप्यते | कोपयति |
| कृञ् | 8 | उ | ಮಾಡು To do | करोति कुरुते | क्रियते | कारयति |

| इच्छार्थे | शतृ/शानच् | क्त/क्तवत् | क्त्वा/ल्यप् | तुम् | विध्यर्थ |
|---|---|---|---|---|---|
| — | आसीन | आसित आसितवत् | आसित्वा समास्य | आसितुम् | आसितव्य आस्य |
| — | अधीयान | अधीत अधीतवत् | अधीत्य | अध्येतुम् | अध्येतव्य अध्येय |
| जिगमिषति | यत् | इत इतवत् | इत्वा प्रेत्य | एतुम् | एतव्य एय |
| एषिषिषति | इच्छत् | इष्ट इष्टवत् | इष्ट्वा समिष्य | एषितुम् | एष्टव्य एष्य |
| ईचिक्षिषते | ईक्षमाण | ईक्षित ईक्षितवत् | ईक्षित्वा प्रतीक्ष्य | ईक्षितुम् | ईक्षितव्य ईक्ष्य |
| एदिधिषते | एधमान | एधित एधितवन् | एधित्वा समेध्य | एधितुम् | एधितव्य एध्यम् |

चिकथयिषति कथयत् कथित कथयित्वा कथयितुम् कथयितव्य
कथयमान कथितवत् प्रकथ्य कथ्य

चिकम्पिषते कम्पमान कम्पित कम्पित्वा कम्पितुम् कम्पितव्य
कम्पितवत् आकम्प्य कम्प्य

— कांक्षत् कांक्षित कांक्षित्वा कांक्षितुम् कांक्षितव्य
कांक्षमाण कांक्षितवत् आकांक्ष्य कांक्ष्य

चुकुपिषति कुप्यन् कुपित कुपित्वा कोपितुम् कोपितव्य
कुपितवत् प्रकुप्य कोप्य

चिकीर्षति कुर्वत् कृत कृत्वा कर्तुम् कर्तव्य
कुर्वाण कृतवत् संस्कृत्य करणीय

| धातुः | गणः | पदम् | अर्थः | कर्तरि | कर्मणि/भावे | प्रेरणार्थे |
| --- | --- | --- | --- | --- | --- | --- |
| क्लृप् | 1 | आ | ಸಮರ್ಥನಾಗು To be capable | कल्पते | कल्प्यते | कल्पयति |
| कृष् | 1 | प | ಎಳೆ To draw | कर्षति | कर्ष्यते | कर्षयति |
| क्रन्द् | 1 | प | ಅಳು To cry | क्रन्दति | क्रन्द्यते | क्रन्दयति |
| क्रम् | 1 | प | ಹೆಜ್ಜೆಯಿಡು To Step | क्रामति | क्राम्यते | क्रामयते |
| क्री | 9 | उ | ಕೊಳ್ಳು To buy | क्रीणाति क्रीणीते | क्रीयते | क्रापयति |
| क्रीड् | 1 | प | ಆಟವಾಡು To play | क्रीडति | क्रीड्यते | क्रीडयति |
| क्षम् | 1 | आ | ಸಹಿಸು | क्षमते | क्षम्यते | क्षमयति |

To endure

क्षल् 10 उ ತೊಳೆ क्षालयति क्षाल्यते क्षालयति

To wash

क्षिप् 6 उ ಒಗೆ क्षिपति क्षिप्यते क्षेपयति

To fling क्षिपते

खाद् 1 प ತಿನ್ನು खादति खाद्यते खादयति

To eat

गण् 10 उ ಲೆಕ್ಕಿಸು गणयति गण्यते गणयति

To count

| इच्छार्थे | शतृ/शानम् | क्त/क्तवत् | क्त्वा/ल्यप् | तुम् | विध्यर्थे |
|---|---|---|---|---|---|
| चिकल्पिषते | कल्पमान | कॢप्त<br>कॢप्तवत् | कल्पित्वा<br>परिकॢप्य | कल्पितुम् | कल्पितव्य<br>कल्प्य |
| — | कर्षत् | कृष्ट | कर्षित्वा<br>आकृष्य | कर्षितुम्<br>कृष्टवत् | कर्षितव्य<br>कर्ष्य |
| चिक्रन्दिषति | क्रन्दत् | क्रन्दित<br>क्रान्दितवत् | क्रन्दित्वा<br>आक्रन्द्य | क्रन्दितुम् | क्रन्दितव्य<br>क्रन्द्य |
| — | क्रामन् | क्रान्त<br>क्रान्तवत् | क्रान्त्वा<br>निष्क्रम्य | क्रमितुम् | क्रमितव्य<br>क्रम्य |
| चिक्रीषति | क्रीणत्<br>क्रीणान | क्रीत<br>क्रीतवत् | क्रीत्वा<br>विक्रीय | क्रेतुम् | क्रेतव्य<br>क्रेय |
| चिक्रीडिषति | क्रीडत् | क्रीडित<br>क्रीडितवत् | क्रीडित्वा | क्रीडितुम् | क्रीडितव्य<br>क्रीड्य |
| चिक्षमिषते | क्षममाण | क्षान्त<br>क्षान्तवत् | क्षान्त्वा<br>आक्षम्य | क्षमितुम् | क्षन्तव्य<br>क्षम्य |

चिक्षालयिषति क्षालयत् क्षालित क्षालयित्वा क्षालयितुम् क्षालयितव्य
क्षालयमान क्षालितवत् प्रक्षाल्य क्षाल्य

चिक्षिप्सति क्षिपत् क्षिप्त क्षिप्त्वा क्षेप्तुम् क्षेप्तव्य
क्षिपमाण क्षिप्तवत् प्रक्षिप्य क्षेप्य

चिखादिषति खादत् खादित खादित्वा खादितुम् खादितव्य
खादितवत् संखाद्य खाद्य

जिगणयिषति गणयत् गणित गणयित्वा गणयितुम् गणितव्य
गणितवत् विगणय्य गण्य

| धातुः | गणः | पदम् | अर्थः | कर्तरि | कर्मणि/भावे | प्रेरणार्थे |
|---|---|---|---|---|---|---|
| गम् | 1 | प | ಹೋಗು<br>To go | गच्छति | गम्यते | गमयति |
| गवेष् | 10 | उ | ಹುಡುಕು<br>To search | गवेषयति | गवेष्यते | गवेषयति |
| गै | 1 | प | ಹಾಡು<br>To sing | गायति | गीयते | गापयति |
| ग्रह् | 9 | उ | ತೆಗೆದುಕೊ<br>To take | गृह्णाति | गृह्यते | ग्राहयति |
| घुष् | 10 | उ | ಗಟ್ಟಿಯಾಗಿ ಹೇಳು<br>To proclaim | घोषयति | घोष्यते | घोषयति |
| चर् | 1 | प | ನಡೆ<br>To walk | चरति | चर्यते | चारयति |
| चिन्त् | 10 | उ | ಚಿಂತಿಸು<br>To think of | चिन्तयति<br>चिन्तयते | चिन्त्यते | चिन्तयति |

| | | | | | | |
|---|---|---|---|---|---|---|
| चिन्त् | 10 | उ | ಕದಿ | चोरयति | चोर्यते | चोरयति |
| | | | To steal | चोरयते | | |
| छद् | 10 | उ | ಮುಚ್ಚು | छादयति | छाद्यते | छादयति |
| | | | To cover | छादयते | | |
| छिद् | 7 | उ | ಕತ್ತರಿಸು | छिनत्ति | छिद्यते | छेदयति |
| | | | To cut | छिन्ते | | |
| जन् | 4 | आ | ಹುಟ್ಟು | जायते | जन्यते | जनयति |
| | | | To be born | | | |

| इच्छार्थे | शतृ/शानम् | क्त/क्तवत् | क्त्वा/ल्यप् | तुम् | विध्यर्थे |
|---|---|---|---|---|---|
| जिगमिषति | गच्छत् | गत | गत्वा | गन्तुम् | गन्तव्यम् |
| | | गतवत् | आगत्य | | गम्य |
| — | गवेषयत् | गवेषित | गवेषयित्वा | गवेषयितुम् | गवेषयितव्य |
| | | गवेषितवत् | संगवेष्य | | गवेष्य |
| जिगासति | गायत् | गीत | गीत्वा | गातुम् | गातव्य |
| | गीयमान | गीतवत् | प्रगाय | | गेय |
| जिघृक्षति | गृह्णत् | गृहीत | गृहीत्वा | ग्रहितुम् | ग्रहीतव्य |
| | गृह्णान | गृहीतवत् | संगृह्य | | ग्राह्य |
| जुघोषिषति | घोषयत् | घोषित | घोषयित्वा | घोषयितुम् | घोषयितव्य |
| | | घोषितवत् | उद्घोष्य | | घोष्य |
| चिचरिषति | चरत् | चरित | चरित्वा | चरितुम् | चरितव्य |
| | | चरितवत् | सञ्चर्य | | चर्य |
| चिन्तितिषति | चिन्तयत् | चिन्तित | चिन्तयित्वा | चिन्तयितुम् | चिन्त्य |
| | चिन्तयमान | चिन्तितवत् | विचिन्त्य | विचिन्त्य | चिन्तयितव्य |
| चुचोरयिषति | चोरयत् | चोरित | चोरयित्वा | चोरयितुम् | चोरयितव्य |

चोरयमाण चोरितवत् चोर्य

चिच्छादयिषति छादयत् छादित छादयित्वा छादयितुम् छादयितव्य

छादितवत् आच्छाद्य छाद्य

चिच्छित्सति छिन्दत् छिन्न छित्त्वा छेत्तुम् छेत्तव्य

छिन्दान छिन्नवत् प्रच्छिद्य छेद्य

— जायमान जात जनित्वा जनितुम् जनितव्य

जातवत् प्रजन्य जन्य

धातुः गणः पदम् अर्थः कर्तरि कर्मणि/भावे प्रेरणार्थे

जि 1 प ಗೆಲ್ಲು जयति जीयते जापयति

To win

जीव् 1 उ ಬದುಕಿರು जीवति जीव्यते जीवयति

To live

ज्ञा 9 उ ಅರಿ जानाति ज्ञायते ज्ञापयति

To know

आ+ज्ञा 10 उ ಅಪ್ಪಣೆಮಾಡು आज्ञापयति आज्ञाप्यते आज्ञापयति

To command

तड् 10 उ ಹೊಡೆ ताडयति ताड्यते ताडयति

To strike ताड्यते

त्यज् 1 प ಬಿಡು त्यजति त्यज्यते त्याजयति

To leave

दह् 1 प ಸುಡು दहति दह्यते दाहयति

To burn

दा 3 उ ಕೊಡು ददाति दीयते दापयति

To give दत्ते

| | | | | | | |
|---|---|---|---|---|---|---|
| दिश् | 6 | उ | ತೋರಿಸು | दिशति | दिश्यते | देशयति |
| | | | To direct | दिशते | | |
| दृश् | 1 | प | ನೋಡು | पश्यति | दृश्यते | दर्शयति |
| | | | To see | | | |
| धा | 1 | उ | ಧರಿಸು | दधाति | धीयते | धापयति |
| | | | To hold | धत्ते | | |

| इच्छार्थे | शतृ/शानच् | क्त/क्तवत् | क्त्वा/ल्यप् | तुम् | विध्यर्थे |
|---|---|---|---|---|---|
| जिगीषति | जयत् | जित | जित्वा | जेतुम् | जेतव्य |
| | | जितवत् | विजित्य | | जेय |
| जिजीविषति | जीवत् | जीवित | जीवित्वा | जीवितुम् | जीवितव्य |
| | | जीवितवत् | उज्जीव्य | | जीव्य |
| जिज्ञासते | जानत् | ज्ञात | ज्ञात्वा | ज्ञातुम् | ज्ञातव्य |
| | जानाना | ज्ञातवत् | विज्ञाय | | ज्ञेय |
| — | आज्ञापयत् | आज्ञापित | आज्ञाप्य | आज्ञापयितुम् | आज्ञापितव्य |
| | | आज्ञापितवत् | | | आज्ञाप्य |
| — | ताडयत् | ताडित | ताडयित्वा | ताडयितुम् | ताडयितव्य |
| | | ताडितवत् | संताड्य | | ताड्य |
| तित्यक्षति | त्यजत् | त्यक्त | त्यक्त्वा | त्यक्तुम् | त्यक्तव्य |
| | | त्यक्तवत् | संत्यज्य | | त्याज्य |
| | दहत् | दग्ध | दग्ध्वा | दग्धुम् | दग्धव्य |
| | | दग्धवत् | प्रदग्ध्य | | दाह्य |
| दित्सति | ददत् | दत्त | दत्वा | दातुम् | दातव्य |
| | ददान | दत्तवत् | प्रदाय | | देय |
| दिदिक्षते | दिशत् | दिष्ट | दिष्ट्वा | देष्टुम् | देष्टव्य |

| | | | | | |
|---|---|---|---|---|---|
| दित्सते | दिशमान | दिष्टवत् | आदिश्य | | देश्य |
| दिदृक्षते | पश्यत् | दृष्ट | दृष्ट्वा | द्रष्टुम् | द्रष्टव्य |
| | | दृष्टवत् | संदृश्य | | दृश्य |
| धित्सति | दधत् | हित | हित्वा | धातुम् | धातव्य |
| | दधान | हितवत् | आधाय | | धेय |

| धातुः | गणः | पदम् | अर्थः | कर्तरि | कर्मणि/भावे | प्रेरणार्थे |
|---|---|---|---|---|---|---|
| धाव् | 1 | उ | ಓಡು<br>To run | धावति<br>धावते | धाव्यते | धावयति |
| नट् | 10 | उ | ಕುಣಿ<br>To dance | नाटयति<br>नाटयते | नाट्यते | नाटयति |
| नन्द् | 1 | प | ಆನಂದಿಸು<br>To be glad | नन्दति | नन्द्यते | नन्दयति |
| नम् | 1 | प | ಬಗ್ಗು<br>To bow | नमति | नम्यते | नमयति |
| नश् | 4 | प | ಮರೆಯಾಗು<br>To vanish | नश्यति | नश्यते | नाशयति |
| निन्द् | 1 | प | ನಿಂದಿಸು<br>To blame | निन्दति | निन्द्यते | निन्दयति |
| नी | 1 | उ | ಒಯ್ಯು<br>To carry | नयति<br>नयते | नीयते | नाययति |
| नृत् | 4 | प | ನಾಟ್ಯಮಾಡು<br>To dance | नृत्यति | नृत्यते | नर्तयति |
| पच् | 1 | उ | ಅಡಿಗೆ ಮಾಡು<br>To cook | पचति<br>पचते | पच्यते | पाचयति |

पठ् 1 प ಓದು पठति पठ्यते पाठयति

To read

पत् 1 प ಬೀಳು पतति पत्यते पातयति

To fall

| इच्छार्थे | शतृ/शानच् | क्त/क्तवत् | क्त्वा/ल्यप् | तुम् | विध्यर्थ |
|---|---|---|---|---|---|
| — | धावत् | धावित | धावित्वा | धावितुम् | धावितव्य |
| | | धावितवत् | प्रधाव्य | | धाव्य |
| — | नाटयत् | नाटित | नाटयित्वा | नाटयितुम् | नाटयितव्य |
| | | नाटितवत् | प्रणाट्य | | नाट्य |
| निनन्दिषति | नन्दत् | नन्दित | नन्दित्वा | नन्दितुम् | नन्दितव्य |
| | | नन्दितवत् | आनन्द्य | | नन्द्य |
| निनंसति | नमत् | नत | नत्वा | नन्तुम् | नन्तव्य |
| | | नतवत् | प्रणम्य | | नम्य |
| निनंक्षति | नश्यत् | नष्ट | नष्ट्वा | नशितुम् | नशितव्य |
| | | नष्टवत् | प्रणश्य | | नाश्य |
| निनिन्दिषति | निन्दत् | निन्दित | निन्दित्वा | निन्दितुत् | निन्दितव्य |
| | | निन्दितवत् | विनिन्द्य | | निन्द्य |
| निनीषति | नयत् | नीत | नीत्वा | नेतुम् | नेतव्य |
| | नयमान | नीतवत् | प्रणीय | | नेय |
| निनर्तिषति | नृत्यत् | नर्तितम् | नर्तित्वा | नर्तितुम् | नर्तितव्य |
| | | नर्तितवत् | | | नृत्य |
| पिपक्षति | पचत् | पक्व | पक्त्वा | पक्तुम् | पक्तव्य |
| | पचमान | पक्ववत् | विपच्य | | पाच्य |
| पिपठिषति | पठत् | पठित | पठित्वा | पठितुम् | पठितव्य |

